त्वायुध्यमानोमुहुर्मुहुः ६३ तस्योपरि हृषीकेशोयदायुधमुत्सृजत् पुष्पवत्तंसमभ्येति कुंठितंतस्यतेजसा ६४ शस्त्रास्त्रैर्विध्य
मानोपियदाजेतुंनशक्यते युयोधचतदाक्रुद्धोबाहुभिःपरिघोपमैः ६५ बाहुयुद्धंकृतंतेनदिव्यवर्षसहस्रकम् तेनश्रांतःसभगवानग
तोबदरिकाश्रमम् ६६ तत्रहैमवतीनाम्नीगुहापरमशोभना तांप्रविश्यमहायोगीशयनार्थंजगत्पतिः ६७ योजनद्वादशायामाएं
कद्वाराधनंजय अहंतत्रप्रसुप्तोस्मिभयभीतोनसंशयः ६८ महायुद्धेनतेनैवश्रांतोहंपांडुनंदन दानवःपृष्ठतोलग्नःप्रविवेशसतां
गुहाम् ६९ प्रसुप्तंमांतदादृष्ट्वाचिंतयद्दानवोहृदि हरिमेनंहरिष्येहंदानवानांक्षयावहम् ७० एवंकृतेमनेस्तस्यव्यवसायंव्यव
७२ युद्धंसमाहितंतेनास्त्रियातत्रप्रयाचितम् तेनायुद्धतसानित्यंतांदृष्ट्वाविस्मयंगतः ७३ केनेयंनिर्मितारौद्राअस्युग्राशनिपा
तिनी इत्युक्त्वादानवेंद्रोसौयुयुधेकन्ययातया ७४ ततस्तयामहादेव्यालक्षयादानवोबली छित्वासर्वाणिशस्त्राणिक्षणेनविरथःकृ
तः ७५ बाहुप्रहरणोपेतोधावमानोमहाबलात् तलेनाहत्यहृदयेतयादेव्यानिपातितः ७६ पुनरुत्थायसोधावत्कन्याहननकां
क्षया दानवंपुनरायांतंरोषेणाहत्यतच्छिरः ७७ क्षणान्निपातयामास भूमौतच्चसमुज्ज्वलत् दैत्यःकृतशिराःसोथययौवैवस्व
तालयम् ७८ शेषाभयार्दितादीनाः पातालंविविशुर्द्रुपः ततःसमुत्थितादेवःपुरोदृष्ट्वाकरहंतम् ७९ कन्यांपुरस्थितांचापि-

कृतांजलिपुटांनताम् विस्मयोत्फुल्लनयनःप्रोवाचजगतांपतिः ८० केनायंनिहतःसख्योदानवोदुष्टमानसः येनदेवाःसगंधर्वाः
सेंद्राश्चसमरुद्गणाः ८१ सनागाःसहलोकेशालीलयैवविनिर्जिताः येनाहंनिर्जितोभूत्वाभीतःस्कंसांगुहामिमाम् ८२ केन-
कारुण्यभावेनरक्षितोहंपलायितः कन्योवाच मयाविनिहतोदैत्यस्त्वदंशोद्भूतयाप्रभो ८३ दृष्ट्वात्वांसंहरेत्त्वांतुयतोहंतुं
समुद्यतः त्रैलोक्यकंटकस्त्वेत्थंव्यवसायंप्रबुध्यच ८४ हतोमयादुरात्मासौदेवतानिर्भयाःकृताः तवैवाहंमहाशक्तिःसर्व
शत्रुभयंकरी ८५ त्रैलोक्यरक्षणार्थायहतोलोकभयंकरः निहतंदानवंदृष्ट्वाकिमाश्चर्यंवदप्रभो ८६ श्रीभगवा० नि-
हतेदानवेद्धेस्मिन्संतुष्टोहंतवानघे हृष्टाःपुष्टाश्चवैदेवाआनंदःसमजायत ८७ आनंदस्त्रिषुलोकेषुदेवानांयस्त्वयाकृतः प्र
सन्नोस्म्यनघेतुभ्यंवरंवरयसुव्रते ८८ ददामितंनसंदेहोयत्सुरैरपिदुर्लभम् कन्योवाच यदितुष्टोसिमेदेवयदिदेयोवरोमम
८९ तारयेहंमहापापादुपवासपरंनरम् उपवासस्ययत्पुण्यंतस्यार्द्धंनक्तभोजने ९० तदर्द्धंचभवेत्तस्यएकभुक्तंकरोतियः
यःकरोतिव्रतंभक्त्यादिनेममजितेंद्रियः ९१ सगत्वावैष्णवंस्थानंकल्पकोटिशतानिच भुंजानोविविधान्भोगानुपवासीजितें
द्रियः ९२ भगवंस्त्वत्प्रसादेनभवत्वेषवरोमम उपवासंचनक्तंचएकभुक्तंकरोतियः तस्यधर्मंचवित्तंचमोक्षंदेहिजनार्दन ९३
श्रीभगवानुवाच यत्त्वंवदसिकल्याणितत्सर्वंचभविष्यति ममभक्ताश्चयेलोकास्तवभक्ताश्चयेनराः ९४ त्रिषुलोकेषुविख्याताः

फलं प्रेषकः पिबेत्तात्रगतंजलम् दिवानिद्रापरान्नंचपुनर्भोजनमैथुने १२ क्षौद्रंकांस्यामिषंतैलंद्वादश्यामष्टवर्जयेत् ...
भाव्यभक्षयेत्तुलसीदलम् १३ अमलक्याःफलंचापिपारणेमस्यशक्यति आमध्याह्नाच्चराजेंद्रद्वादश्यामरुणोदये १४ स्नाना
नक्रियाःकार्यादानहोमादिसंयुताः संकटेविषमेप्राप्तेद्वादश्याःपारणंकथम् १५ अद्भिस्तुपारणंकुर्यात्पुनर्भुक्तंनदोषकृत् यः
णोतिदिवारात्रौनरोविष्णुपरायणः १६ तद्भक्तमुखनिष्पन्नांकथांविष्णोःसुमंगलाम् कल्पकोटिसमायुक्तोविष्णुलोकेमहीयते १
एकादश्याश्चमहात्म्यंपादमेकंशृणोतियः ब्रह्महत्यादिकंपापंनश्यतेनात्रसंशयः १८ विष्णुधर्मसमन्नास्तितन्नामसनातनम् १
इतिश्रीभविष्योत्तरपुराणेश्रीकृष्णार्जुनसंवादेमार्गशीर्षेकृष्णैकादशीमहात्म्यंसंपूर्णम् अथमार्गशीर्षशुक्लैकादशीकथा
युधिष्ठिरउवाच वंदेविष्णुंप्रभुंसाक्षाल्लोकत्रयसुखप्रदम् विश्वेशंविश्वकर्तारंपुराणंपुरुषोत्तमम् १ पृच्छामिदेवदेवेशसंशय
स्तिमहान्मम लोकानांतुहितार्थायपापानांचक्षयायच २ मार्गशीर्षेसितेपक्षेकिन्नामैकादशीभवेत् कीदृशश्चविधिस्तस्याःको
स्तत्रपूज्यते ३ एतदाचक्ष्वमेस्वामिन्विस्तरेणयथातथम् श्रीभगवानुवाच सम्यक्पृष्टंत्वयाराजन्साधुतेविपुलंयशः ४ कथ
यामिराजेंद्रहरिवासरमुत्तमम् उत्पन्नासासितेपक्षेद्वादशीममवल्लभा ५ मार्गशीर्षेसमुत्पन्नाममदेहान्नराधिप मुरस्यचव
नस्याताममवल्लभा ६ कथितासामयाचैवत्वदग्रेराजसत्तम पूर्वमेकादशीराजन्त्रैलोक्येसचराचरे ७ मार्गशीर्षेसिते

प्राप्स्यंतिममसन्निधिम् एकादश्यांसमुत्पन्नाममशक्तिःपरायन: १५ अतएकादशीत्येवंतवनामभविष्यति दग्ध्वापापानि
स्यामिपदमव्ययम् १६ तृतीयाचाष्टमीचैवनवमीचचतुर्दशी एकादशीविशेषेणतिथयोमेमहाप्रियाः १७ सर्वतीर्थाधि
सर्वदानाधिकंफलम् सर्वव्रताधिकंचैवसत्यंसत्यंवदामिते १८ एवंदत्वावरंतस्यात्तत्रैवांतरधीयत हृष्टातुष्टातुसाजातातदा
दशीतिथिः १९ इमांमेकादशींपार्थकरिष्यंतिनरास्तुये तेषांशत्रुंहनिष्यामिदास्यामिपरमांगतिम् १०० अन्येपियेकरिष्य
कादश्यामहाव्रतम् हरामितेषांविघ्नांश्चसर्वसिद्धिंददामिच १ एवमुक्तासमुत्पत्तिरेकादश्याःपृथाकृत इयमेकादशीनित्यास
क्षयंकरी २ एकैवचमहापुण्यासर्वपापनिषूदनी उदितासर्वलोकेषुसर्वसिद्धिकरीतिथिः ३ शुक्लावाप्यथवाकृष्णाद्वादशीभे
कारयेत कर्तव्येउभयेपार्थनतत्याद्वादशीतिथिः ४ अंतरंनैवकर्तव्यंसमस्तैर्व्रतकारिभिः तिथिरेकाभवेत्सर्वापक्षयोरुभ
५ एकादशीतुसंपूर्णाप्रभातेघटिकायदि सातिथिःपरिहर्तव्याउपोष्याद्वादशीतदा ६ एवंविधामयाप्रोक्तापक्षयोरुभयोर
पवासंयःकुर्वंतिएकादश्यांनराश्चये ७ तेयांतिपरमंस्थानंयत्रास्तेगरुडध्वजः धन्यास्तेमानवालोकेविष्णुभक्तिपरायणाः ८ ए
श्यास्तुमाहात्म्यंसर्वलोकेषुयःपठेत् अश्वमेधस्ययत्पुण्यंतदाप्नोतिनसंशयः ९ एकादश्यांनिराहारःस्थित्वाचाहंपरेहनि भोक्ष्य
पुंडरीकाक्षशरणंमेभवाच्युत १० [illegible] नाभिमंत्रितम् ११ [illegible]

घजाभिश्चसमंततः २४ आश्रमोविपुलस्तस्यमुनिभिःसन्निषेवितः ॥ वेदिभिर्यजुषैश्चसामाथर्वणकोविदैः २५ वेष्टितोमुनिभि
स्तत्रद्वितीयइवपद्मजः दृष्ट्वातंमुनिशार्दूलराजावैखानसस्तदा २६ जगामचावनिंमूर्ध्नादंडवत्प्रणनामच पप्रच्छकुशलंतस्य
सप्तस्वंगेषुसोमुनिः २७ राज्येनिःकंटकत्वंचराज्यंसौख्यसमन्वितम् राजोवाच प्रसादात्कुशलंविप्रअंगेषुममसप्तसु २८
विभवेष्वनुकूलेषुकश्चिद्विघ्नउपस्थितः एतंमेसंशयंब्रह्मन्प्रष्टुंत्वांचसमागतः २९ एवंश्रुत्वानृपवचःपर्वतोमुनिसत्तमः ध्यान-
स्तिमितनेत्रोसौभूतंभव्यंविचिंतयन् ३० मुहूर्तमेकंध्यात्वाचप्रत्युवाचनृपोत्तमम् मुनिरुवाच जानेहंतवराजेंद्रपितुःपापंविकर्म-
णः ३१ पूर्वजन्मनितेपित्रासपत्नीकृतद्वेषतः कामासक्तेनचैकत्रऋतुभंगःकृतःस्त्रियः ३२ आहिदेहीतिजल्पंत्याऋतुदानंनराधि
प तेनवैतवपित्रातुनदत्तोऋतुराग्रहात् ३३ कर्मणातेनसततंनरकेपतितोह्ययम् राजोवाच केनवैव्रतदानेनमोक्षस्तस्य-
भवेन्मुने ३४ निरयात्तापसंयुक्तात्तन्ममाचक्ष्वपृच्छतः मुनिरुवाच मार्गशीर्षेसितेपक्षेमोक्षानाम्नीहरेस्तिथिः ३५ सर्वैस्त
द्व्रतंकृत्वापित्रेपुण्यंप्रदीयताम् तस्याःपुण्यप्रभावेनमोक्षस्तस्यभविष्यति ३६ मुनेर्वाक्यंततःश्रुत्वानृपःस्वगृहमागतः आग्रहायणि
कींकृच्छ्रात्प्राप्तोभरतसत्तम ३७ अंतःपुरचरैःसर्वैःपुत्रैर्दारैस्तथानृपः व्रतंकृत्वाविधानेनपुण्यंदत्त्वानृपायतत् ३८ तस्मिन्दत्तेत-
दापुण्येपुष्पवृष्टिरभूद्दिवः वैखानसपितातेनगतःस्वर्गंस्तुतोगणैः ३९ राजानमंतरिक्षाच्चशंसन्वाचमभाषत स्वस्त्यस्तुतेपुत्र-

त्पत्तिरितिनामतः अतःपरंप्रवक्ष्यामिमार्गशीर्षसितांतथा ८ तस्याःश्रवणमात्रेणवाजपेयफलंलभेत् मोक्षानाम्नीतिविख्याता सर्वपा
पहरापरा ९ देवंदामोदरंतस्यांपूजयेच्चप्रयत्नतः तत्रापिपूजनंचैवगीतनृत्यैःसुमंगलैः १० शृणुराजेंद्रवक्ष्यामिकथांपौराणिकींशुभा
म् अधोगतिंगतायेचैपितृमातृसुतादयः ११ अस्याःपुण्यप्रभावेनस्वर्गयांतिनसंशयः एतस्मात्कारणाद्राजन्माहिमानंशृणुष्वतम् १२
पुराचैनगरेरम्येगोकुलेन्यवसन्नृपः वैखानसेतिराजर्षिःपुत्रवत्पालयन्प्रजाः १३ द्विजाश्चन्यवसंस्तत्रचतुर्वेदपरायणाः एवंसराज्यंकुर्वाणो
रात्रौतुस्वप्नमध्यतः १४ ददर्शजनकंस्वंतुअधोयोनिगतंनृपः एवंदृष्ट्वातुतत्रविस्मयोत्फुल्ललोचनः १५ कथयामासवृत्तांतंद्विजा
ग्रेस्वप्नसंभवम् राजोवाच मयातुस्वपिताहृष्टोनरकेपतितोद्विजाः तारयस्वेतिमांतातअधोयोनिगतंसुत १६ इतिवुवाणःसतदाम
याहृष्टःपितास्वयम् तदाप्रभृतिभोविप्रानाहंशर्मलभाम्यहो १७ एतद्राज्यंमममहृदसह्यमसुखंतथा अश्वागजारथाश्चैवनमांरो
चंतिसर्वथा १८ नकोशोपिसुखायेतिनकिंचित्सुखदंमम नदारानसुतामह्यंरोचंति द्विजसत्तमाः १९ किंकरोमिक्वगच्छामिशरीरंमे
तुदह्यते दानंव्रतंतपोयोगोयेनैवममपूर्वजाः २० मोक्षमावांतिविप्रेंद्रास्तद्वकथयंतुमे किंतेनजीवताल्लोकेसुपुत्रेणवलीयसा
२१ पितातुयस्यनरकेतस्यजन्मनिरर्थकम् ब्राह्मणाऊचुः पर्वतस्यमुनेरत्रआश्रमोनिकटेनृप २२ गम्यतांराजशार्दूलभू
तंभव्यंविजानतः तेषांश्रुत्वाततोवाक्यंवैखानोराजसत्तमः २३ जगामतत्रयत्रासौआश्रमेपर्वतोमुनिः ब्राह्मणैर्वेष्टितःशांत

जयेत्तत्रकालदेशोद्भवैःशुभैः १२ नारिकेलफलैःशुद्धैस्तथावैबीजपूरकैः जंबीरैर्दाडिमैश्चैवतथापूगीफलैरपि १३ लवंगैर्वि
विधैश्चान्यैस्तथाचाम्रफलादिभिः पूजयेद्देवदेवेशंधूपैर्दीपैर्यथाक्रमम् १४ सफलायांदीपदानंविशेषेणप्रकीर्तितम् रात्रौजागरणं
तत्रकर्तव्यंचप्रयत्नतः १५ यावदुन्मीलयेन्नेत्रेतावज्जागर्तियोनिशि एकाग्रमानसोभूत्वातस्यपुण्यंशृणुष्वतत् १६ तत्समोनास्तिवै
यज्ञस्तीर्थंनतत्सदृशंनहि तत्समंनव्रतंकिंचिदिहलोकेनराधिप १७ पंचवर्षसहस्राणितपस्तप्त्वाचयत्फलम् तत्फलंसमवाप्नोति
सफलायाव्रतेनवै १८ श्रूयतांराजशार्दूलसफलायाःकथानकम् चंपावतीतिविख्यातापुरीमाहिष्मतस्यच १९ माहिष्मतस्यराजर्षे
श्चत्वारश्चाभवन्सुताः तेषांमध्येतुयोज्येष्ठःसमहापापसंयुतः २० परदाराभिगामीचवेश्यासंगरतःसदा पितुर्द्रव्यंसपापिष्ठोगमया-
मासस्सर्वशः २१ असद्वृत्तिरतोनित्यंदेवताद्विजनिंदकः वैष्णवानांचदेवानांनित्यंनिंदारतःसवै २२ ईदृग्विधंतदादृष्ट्वापुत्रंमाहिष्म
तोनृपः लुंपकोनामनाम्नेतिकृतवानस्यमर्षितः राज्यान्निष्काशितस्तेनपित्राचैवापिबंधुभिः परिवारजनैःसर्वैस्त्यक्तोराज्ञोभयादिति
२४ लुंपकोपितदात्यक्तश्चिंतयामासह्येकलः मयात्रकिंप्रकर्तव्यंत्यक्तःपित्राचबांधवैः २५ इतिचिंतापरोभूत्वामतिंपापेतदाकरोत् म
यातुगमनंकार्यंवनेत्यक्त्वापुरंपितुः २६ तस्माद्वनात्पितुःसर्वंव्यापयिष्येपुरंनिशि दिवावनेचरिष्यामिरात्रावपिपितुःपुरम् २७ इत्ये-
वंसमतिंकृत्वालुंपकोदैवपातितः निर्जगामपुरात्तस्मात्गतोसौगहनंवनम् २८ जीवघातकरोनित्यंनित्यस्तेयपरायणः सर्वंचन-

सदेहःस्त्वासन्निदिवंगतः ४० एवंयःकुरुतेराजन्मोक्षमेकादशीमिमाम् तस्यपापंक्षयंयातिमृतोमोक्षमवाप्नुयात् ४१ नान्यापरतराका
म्यमोक्षदाविमलाशुभा पुण्यसंख्यांतुराजेंद्र नजानेहंतुयेःकृता ४२ पठनाच्छ्रवणात्तस्यावाजपेयफलंलभेत् चिंतामणिसमा
ह्येषास्वर्गमोक्षप्रदायिनी ४३ इतिश्रीब्रह्मांडपुराणेमार्गशीर्षशुक्लैकादश्यामोक्षानाम्न्यामहात्म्यंसमाप्तम् अथपौषकृष्णैकाद
शीकथा युधिष्ठिरउवाच पौषस्यकृष्णपक्षेतुद्वादशीयाभवेत्प्रभो किंनामकोविधिस्तस्याः कोदेवस्तत्रपूज्यते १ एतदाच-
क्ष्वमेस्वामिन्विस्तरेणजनार्दन श्रीकृष्णउवाच कथयिष्यामिराजेंद्र भवतःस्नेहकारणात् २ तथातुष्टिर्नमेराजन्क्रतुभिश्चाप्त
दक्षिणैः यथातुष्टिर्भवेन्मह्यमेकादश्याव्रतेनवै ३ तस्मात्सर्वप्रयत्नेनकर्तव्योहरिवासरः पौषस्यकृष्णपक्षेतुद्वादशीयाभवेन्नृप
४ तस्याश्चैवचमाहात्म्यंशृणुष्वैकाग्रमानसः गदितायाश्चवैराजन्एकादश्योभवंतिहि ५ तासामपिहिसर्वासांविकल्पंनैवकारयेत्
तथापिह्येकादश्याश्चशृणुराजन्कथानकम् ६ अतःपरंप्रवक्ष्यामिपौषस्यैकादशींतव लोकानांचहितार्थायकथयिष्येविधिंतव ७
पौषस्यकृष्णपक्षेयासफलानामनामतः नारायणोधिदेवोस्याःपूजयेत्तंप्रयत्नतः ८ पूर्वेणविधिनाराजन्कर्तव्यैकादशीजनैः नागा
नांचयथाशेषःपक्षिणांगरुडोयथा ९ यथाश्वमेधोयज्ञानांनदीनांजाह्नवीयथा व्रतानांचतथाराजन्प्रवरैकादशीतिथिः १० तेज-
नाभरतश्रेष्ठममपूज्याश्चसर्वशः हरिवासरसंसक्तावर्त्तंतेयेजनाभृशम् ११ सफलानामयाप्रोक्तातस्याःपूजाविधिंशृणु फलैर्मांपू-

वेलायांदिव्योश्वश्चाजगामह ४६ दिव्यवस्त्रपरीवारोलुंपकस्यसमीपतः तस्थौसतुरागोराजन्वागुवाचाशरीरिणी ४७ प्राप्नुहित्वं
नृपकतस्त्वराज्यंहतकंटकम् वासुदेवप्रसादेनसफलायाःप्रभावतः ४८ पितुःसमीपंगच्छत्वंभुंक्ष्वराज्यमकंटकम् तथेत्युक्त्वा-
त्वसौतत्रदिव्यरूपधरोभवत् ४९ कृष्णेमतिश्चतस्यासीत्परमावैष्णवीतथा दिव्याभरणशोभाढ्यस्तातंनत्वास्थितोगृहे ५० वैष्णा-
वायततोदत्तंपित्राराज्यमकंटकम् कृतराज्यंतुतेनैववर्षाणिसुबहून्यपि ५१ हरिवासरसंलीनोविष्णुभक्तिरतःसदा मनोज्ञास्तस्यपुत्राः
स्युर्दाराःकृष्णप्रसादतः ५२ ततःसवार्धकेराज्येप्राप्तेपुत्रंनिवेश्यच वनंगतःसंयतात्माविष्णुभक्तिपरायणः ५३ साधयित्वातथात्मा
नंविष्णुलोकंजगामह गतःकृष्णस्यसान्निध्येयत्रगत्वानशोचति ५४ एवंयेवैप्रकुर्वंतिसफलैकादशीव्रतम् इहलोकेयशःप्राप्यमो
क्षंचाप्स्यंत्यसंशयः ५५ धन्यास्तेमानवालोकेसफलाव्रतकारिणः तस्मिञ्जन्मनितेमोक्षंलभंतेनात्रसंशयः ५६ सफलायाश्चमहा-
त्म्यश्रवणाद्धिविशांपते राजसूयफलंप्राप्यवसेत्स्वर्गेचमानवः ५७ इतिश्रीपौषकृष्णैकादशीसफलानाम्न्यामहात्म्यंसंपूर्णम्
अथपौषशुक्लैकादशीकथा युधिष्ठिरउवाच कथितावैत्वयाकृष्णसफलैकादशीशुभा कथयस्वप्रसादेनशुक्लापौषस्ययाभवे
त् १ किंनामसकोविधिस्तस्याःकोदेवस्तत्रपूज्यते कस्मैतुष्टोहृषीकेशस्त्वमेवपुरुषोत्तम २ श्रीकृष्णउवाच शृणुराजन्प्रवक्ष्या-
मिशुक्लापौषस्ययाभवेत् तस्याविधिंमहाराजलोकानांचहितायवै ३ पूर्वेणविधिनाराजन्कर्तव्येषाप्रयत्नतः पुत्रदेतिचनाम्ना-

गरंतेनमुषितंपापकर्मणा २९ गृहीतश्चपरित्यक्तोराज्ञोमाहिष्मतेर्भयात् जन्मांतरीयपापेनराज्यभ्रष्टःसपापकृत् ३० आमिषाणि
रतोनित्यंनित्यंवैफलभक्षकः आश्रमस्तस्यदुष्टस्यवासुदेवस्यसंमतः ३१ अश्वत्थोवर्त्ततेतत्रजीर्णोबहुलवार्षिकः देवत्वंतस्यवृक्षस्य
वर्ततेतद्वनेमहत् ३२ तत्रैवनिवसंश्चासौलुंपकःपापबुद्धिमान् एवंकालक्रमेणैववसतस्तस्यपापिनः ३३ दुष्कर्मनिरतस्यास्य-
कुर्वतःकर्मनिंदितम् पौषस्यकृष्णपक्षेतुपूर्वाण्हेसफलादिने ३४ दशमीदिवसेराजन्निशायांशीतपीडितः लुंपकोवस्त्रहीनोवैनि-
श्चेष्टोह्यभवत्तदा ३५ पीड्यमानस्तुशीतेनअश्वत्थस्यसमीपगः ननिद्रांनसुखंतस्यगतप्राणइवाभवत् ३६ पीडयन्दशनैर्दंतानेवं
चगमितानिशा भानूदयेपितस्याथनसंज्ञासमजायत ३७ लुंपकोगतसंज्ञस्तुसफलादिवसेतदा मध्यान्हसमयेप्राप्तेसंज्ञांलेभेसलुंप-
कः ३८ प्राप्तसंज्ञामुहूर्तेनचोत्थितोसौतदासनात् प्रस्खलंश्चपदन्यासैःपंगुवच्चलितोमुहुः ३९ वनमध्येगतस्तत्रक्षुत्तृषापीडितोभ-
वत् नशक्तिर्जीवघातस्यलुंपकस्यदुरात्मनः ४० फलानिभूमौपतितान्याजहारसलुंपकः यावत्सचागतस्तत्रतावदस्तमगाद्रविः ४१
किंभविष्यतितातेतिविललापातिदुःखितः फलानितानिसर्वाणिवृक्षमूलेन्यवेदयत् ४२ प्रत्युवाचफलैरेभिःप्रीयतांभगवान्हरिः उ
पविष्टोलुंपकश्चनिद्रांलेभेनवैनिशि ४३ तेनजागरणंजातंभगवान्मधुसूदनः फलानांपूजनंमेनेसफलायास्तथाव्रतम् ४४ कृ-
तमेवंलुंपकेनह्यकस्माद्व्रतमुत्तमम् तेनव्रतप्रभावेनप्राप्तंराज्यमकंटकम् ४५ पुण्यांकुरोदयाद्राजन्यथाप्राप्तंतथाशृणु रवेरुदय

देहंप्रक्षीणमपुत्रत्वंतथैवच पुनर्विचार्यात्मबुद्ध्याह्यात्मनोहितकारणम् २१ अश्वारूढस्ततोराजाजगामगहनंवनम् पुरोहितादयः
सर्वेनजानंतिगतंनृपम् २२ गंभीरेविपिनेराजामृगपक्षिनिषेविते विचचारतदातस्मिन्वनवृक्षान्विलोकयन् २३ बदरानश्वत्थबिल्वां
श्चखर्जुरान्पनसांस्तथा बकुलांश्चसदापर्णान्तिंदुलांस्तिलकानपि २४ शालांस्तालांस्तमालांश्चददर्शसरलान्नृपः इंगुदीककुभांश्चै
वश्लेष्मातकबिभीतकान् २५ शल्लकींकरमर्दांश्चपाटलान्खदिरानपि शाकांश्चैवपलाशांश्चशोभितान्ददृशेनृपः २६ मृगव्याघ्रवरा-
हांश्चसिंहान्शाखामृगानपि गवयान्कृष्णसारांश्चसृगालान्शशकानपि २७ वनमार्जारकान्क्रूरान्शल्लकांश्चमरानपि ददर्शभुजगान्
राजावल्मीकादभिनिःसृतान् २८ तथावनगजान्मत्तान्कलभैःसहसंगतान् यूथपांश्चचतुर्दंतान्करिणीगणमध्यगान् २९ तान्दृष्ट्वाचिंत
यामासबुद्ध्यात्मनःसगजान्नृपः तेषांसविचरन्मध्येराजाशोकमवापह ३० महदाश्चर्यसंयुक्तंददर्शविपिनंनृपः क्वचिच्छिवारुतंशृण्वन्नुल
कविरुतंतथा ३१ तांस्तान्पक्षिगणान्पश्यन्बभ्रामवनमध्यगः एवंददर्शगहनंनृपोमध्यंगतेरवौ ३२ क्षुत्तृड्भ्यांपीडितोराजाइतश्चेत-
श्चधावति चिंतयामासनृपतिःसंशुष्कगलकंधरः ३३ मयातुकिंकृतंकर्मप्राप्तंदुःखंयदीदृशम् मयावैतोषितादेवायज्ञैःपूजाभिरेवच ३४
तथैवब्राह्मणादानैस्तोषितामिष्टभोजनैः प्रजाश्चैवयथाकालंपुत्रवत्परिपालिताः ३५ कस्माद्दुःखंमयाप्राप्तमीदृशंदारुणंमहत् इतिचिं-
तापरोराजाजगामाथाग्रतोवनम् ३६ सुकृतस्यप्रभावेनसरोदृष्टंमनोरमं मानसंस्पर्धमानंचपद्मिनीपरिशोभितम् ३७ कारंडवैश्च

सोसर्वपापहरापरा ४ नारायणोधिदेवोस्याःकामदःसिद्धिदायकः नातःपरतराकाचित्त्रैलोक्येसचराचरे विद्यावंतंयशस्वंतंकरोतिच
नरोहरिः ५ शृणुराजन्प्रवक्ष्यामिकथांपापहरांपराम् पुरीभद्रावतीनाम्नीराजातत्रसुकेतुमान् ६ तस्यराज्ञोथराज्ञीचशैब्यानाम्नीति-
विश्रुता पुत्रहीनेनराज्ञाचकालोनीतोमनोरथैः नैवात्मजंनृपोलेभेवंशकर्त्तारमेवच ७ तेनैवराज्ञाधर्मेणचिंतितंबहुकालतः किंकरो-
मिक्वगच्छामिसुतप्राप्तिःकथंभवेत् ८ नराष्ट्रेनपुरेसौख्यंलेभेराजासुकेतुमान् शैब्ययाकांतयासार्द्धंप्रत्यहंदुःखितोभवत् ९ तावु-
भौदंपतीनित्यंचिंताशोकपरायणौ पितरस्तज्जलंदत्तंकवोष्णमुपभुंजते १० राज्ञःपश्चान्नपश्यामोयोस्मान्संतर्पयिष्यति इत्येवंसंस्मर-
तोस्यपितरोदुःखितोभवन् ११ तेषांतद्दुःखमूलंचज्ञात्वाराजाप्यतप्यत नबांधवानमित्राणिनामात्याःसुहृदस्तथा १२ रोचंतेतस्य
भूपस्यनगजाश्वपदातयः नैराश्यंभूपतेस्तस्यमनस्येवमजायत १३ नरस्यपुत्रहीनस्यनास्तिवैजन्मनःफलम् अपुत्रस्यगृहंशून्यंहृद
यंदुःखितंसदा १४ पितृदेवमनुष्याणांनानृणित्वंसुतंविना तस्मात्सर्वप्रयत्नेनसुतमुत्पादयेन्नरः १५ इहलोकेयशस्तेषांपरलोकेशुभा
गतिः येषांतुकर्मकनृणांपुण्यंजन्मशतोद्भवम् १६ आयुरारोग्यसंपत्तिस्तेषांगेहेप्रवर्त्तते पुत्राःपौत्राश्चलोकाश्चभवेयुःपुण्यकर्मणाम्
१७ पुण्यंविनानचप्राप्तिर्विष्णुभक्तिंविनातथा पुत्राणासंपदोवापिविद्यायाश्चेतिमेमतिः १८ एवंचिंतयमानोसौराजाशर्मनलब्धवान्
सनृपेचिंतयद्राजानिशीथेचिंतयत्तथा १९ ततश्चात्मविनाशंवैविचार्यथसुकेतुमान् आत्मघातेदुर्गतिंचचिंतयित्वातदानृपः २० इत्यात्म

दाभिधम् ५४ तेषांचैवभवेत्पुत्रो ह्यवश्यंमोक्षभागिनाम् पठणाच्छ्रवणाद्राजन्नश्वमेधफलंलभेत् ५५ इतिश्रीभविष्योत्तरपु
राणेपौषशुक्लैकादशीपुत्रदानाख्यामाहात्म्यंसंपूर्णम् अथमाघकृष्णैकादशीकथा दाल्भ्यउवाच मर्त्यलोकेतुसंप्राप्ताःपापंकुर्वं-
तिजंतवः ब्रह्महत्यादिपापैश्चह्यन्यैश्चविविधैर्युताः १ परद्रव्यापहाराश्चपरव्यसनमोहिताः कथंनायांतिनरकान्ब्रह्मन्तत्कब्रूहितत्वतः २
अनायासेनभगवन्दानेनाल्पेनकेनचित् पापंप्रशममायातियेनतद्वक्तुमर्हसि ३ गभस्तिरुवाच साधुसाधुमहाभागगुह्यमेतदुदाहृत
म् यन्नकस्यचिदाख्यातंब्रह्मविष्ण्विंद्रदैवतैः ४ तदहंकथयिष्यामित्वयापृष्टोद्विजोत्तम ततोमाघेतुसंप्राप्तेशुचिःस्नातोजितेंद्रियः काम-
क्रोधाभिमानेर्ष्यालोभपैशून्यवर्जितः देवदेवंचसंस्मृत्यपादौप्रक्षाल्यवारिणा ६ भूमावपतितंग्राह्यंगोमयंतत्रमानवः तिलान्प्रक्षिप्यकार्पा
सपिंडकांश्चैवकारयेत् ७ अष्टोत्तरशतंचैवनात्रकार्याविचारणा ततोमाघेचसंप्राप्तेह्यार्द्रौचैवभयेयदि ८ मूलेवाकृष्णपक्षस्यैकादश्यां
नियमंततः गृह्णीयात्पुण्यफलदंविधानंतत्रमेशृणु ९ देवदेवंसमभ्यर्च्यसुस्नातःप्रयतःशुचिः कृष्णनामानिसंकीर्त्यक्षुतज्ञंभक्तसर्व-
दा १० रात्रौजागरणंकुर्याद्रात्रौहोमंचकारयेत् अर्चयेद्देवदेवेशंशंखचक्रगदाधरम् ११ चंदनागरुकर्पूरैर्नैवेद्यंकृसरंतथा संस्मृत्यना-
म्नाचततःकृष्णाख्येनपुनःपुनः १२ कूष्मांडैर्नारिकेलैश्चह्यथवाबीजपूरकैः सर्वाभावेपिविप्रेंद्रशस्तंपूगीफलंतथा १३ अर्घ्यं[illegible]धाने
नपूजयित्वाजनार्दनम् कृष्णकृष्णकृपालुस्त्वमगतीनांगतिर्भव १४ संसारार्णवमग्नानांप्रसीदपरमेश्वर नमस्तेपुंडरीकाक्षनमस्तेविश्वभा-

क्रवाकैराजहंसैश्चनादितम् मकरैर्बहुभिर्युक्तमन्यैर्जलचरैर्युतम् ३८ समीपेसरसस्तत्रमुनीनामाश्रमान्बहून् ददर्शराजालक्ष्मीवा
न्निमित्तैःशुभशंसिभिः ३९ सव्यात्परतरंचक्षुःभास्फुरच्चतथाकरः स्फुरितैस्तस्यराज्ञश्चशंसितशुभलक्षणम् ४० तस्यतीरेमुनीन्दृष्ट्वाकु
र्वाणान्नैगमंजपम् अवतीर्यहयात्तस्मान्मुनीनामग्रतःस्थितः ४१ पृथक्पृथक्ववंदेसमुनींस्तान्शंसितव्रतान् कृतांजलिपुटोभूत्वा
दंडवच्चप्रणम्यसः ४२ हर्षेणमहताविष्टोबभूवनृपसत्तमः तमूचुस्तेपिमुनयःप्रसन्नास्मोवयंतव ४३ कथयस्वाद्यवैराजन्यत्तेमनसि-
वर्तते राजोवाच केयूरसुप्रतपसःकिमाख्याभवतामपि ४४ किमर्थमागतायूयंवदंतुममतत्वतः मुनयऊचुः विश्वेदेवावयंराज-
स्नानार्थमिहचागताः ४५ माघोनिकटमायातएतस्मात्पंचमेहनि अद्यश्चैकादशीराजन्पुत्रदानामनामतः ४६ पुत्रंददात्यसौशुक्लापुत्रदापु
त्रमिच्छताम् राजोवाच एषवैसंशयोमह्यंकृतस्योत्पादनेमहान् ४७ यदितुष्टाभवंतोमेपुत्रोवैदीयतांतदा मुनयऊचुः अस्मिन्ने-
वदिनेराजन्पुत्रदानामवर्तते ४८ एकादशीतिविख्याताक्रियतांव्रतमुत्तमम् आशीर्वादेनचास्माकंकेशवस्यप्रसादतः ४९ अवश्यं
नवराजेंद्रपुत्रप्राप्तिर्भविष्यति इत्येवंवचनात्तेषांकृतंराज्ञाव्रतंशुभम् ५० द्वादश्यांपारणंकृत्वामुनीन्नत्वापुनःपुनः आजगामगृहंरा-
जाराज्ञीगर्भसमादधौ ५१ मुनीनांवचनेनैवपुत्रदायाःप्रसादतः पुत्रोजातस्तथाकालेतेजस्वीपुण्यकर्मकृत् ५२ पितरंतोषयामासप्रजापा
लोबभूवसः एतस्मात्कारणाद्राजन्कर्तव्यंपुत्रदाव्रतम् ५३ लोकानांचहितार्थायतवाग्रेकथितंमया एतद्व्रतंतुयेमर्त्याः कुर्वंतिपुत्र-

क्रोधेनमहताविष्टाइदं वचनमब्रवीत् मयाव्रतैश्चकृच्छ्रैश्चह्यपवासैरनेकशः ३५ पूजयाराधितोदेवःसर्वलोकस्यभावनः नधनंदृश्यतेकिं-
चिद्धहेममजनार्दन ३६ ततश्चोक्तामयासातुगृहंगच्छयथागतम् आगमिष्यंतिस्त्रतरांकौतूहलसमन्विताः ३७ देवपत्न्यस्त्वद्द्रष्टुंविस्म-
येनसमन्विताः द्वारंनोद्घाटनीयंहिषट्तिलापुण्यवाचनात् ३८ एवमुक्तागतासातुयदावैमानुषीतदा अत्रांतरेसमायातादेवपत्न्यश्चनारद ३९
ताभिश्चकथितंतत्रत्वांद्रष्टुंहिसमागताः द्वारमुद्घाटयत्वंचपश्यामत्वांशुभानने ४० मानुष्युवाच यदिद्रष्टुंमयाकार्यंसत्यंवाच्यंविशेषतः
षट्तिलाव्रतंपुण्यंद्वारोद्घाटनकारणात् ४१ एकापितत्रनवदत्षट्तिलाव्रतनाशतः अन्यथाकथितंतत्रद्रष्टव्यामानुषीमया ४२ ततोद्वारं
समुद्घाट्यदृष्टाताभिश्चमानुषी नदेवीनचगंधर्वीनासुरीनचपन्नगी ४३ दृष्टापूर्वंतयानारीईदृशीसाद्विजर्षभ रूपकांतिसमायुक्ताक्षणेन-
समपद्यत ४४ धनंधान्यंचवस्त्रादिसुवर्णरौप्यमेवच सर्वंभवनसंपन्नंषट्तिलायाःप्रसादतः ४५ अतितृष्णानकर्तव्यावित्तशाठ्यंविवर्जये-
त् आत्मवित्तानुसारेणतिलान्वस्त्रादिदापयेत् ४६ लभतेचैवमारोग्यंततोजन्मनिजन्मनि दारिद्र्यंनचकष्टंयैनचदौर्भाग्यमेवच ४७ न
भवेद्धैद्विजश्रेष्ठषट्तिलायाउपोषणात् अनेनविधिनाराजंस्तिलदानान्नसंशयः ४८ मुच्यतेपातकैःसर्वैर्नात्रकार्याविचारणा दानंचविधिनास-
म्यक्सर्वपापप्रणाशनम् ४९ नानर्थःकश्चिन्नायासःशरीरेमुनिसत्तम ५० इतिश्रीभविष्योत्तरपुराणेमाघकृष्णैकादशीषट्तिलानाम्नीमा-
हात्म्यंसंपूर्णम् अथमाघशुक्लैकादशीकथा युधिष्ठिरउवाच साधुकृष्णत्वयाप्रोक्ताआदिदेवजगत्पते स्वेदजाअंडजाश्चैवउद्भि-

वन १५ कृष्णब्रह्मण्यनमस्तेस्तुमहापुरुषपूर्वज गृहाणार्घ्यंमयादत्तंलक्ष्म्यासहजगत्पते १६ ततस्तुपूजयेद्विप्रमुदकुंभंप्रदापयेत् छत्रोपान
हवस्त्रैश्चकृष्णोमेप्रियतामिति १७ कृष्णाधेनुःप्रदातव्यायथाशक्त्याद्विजोत्तम तिलपात्रंद्विजश्रेष्ठदद्यात्तत्रविचक्षणः १८ स्नानप्राशनयोःशस्ताःश्वेताःकृ
ष्णास्तिलामुने तान्प्रदद्यात्प्रयत्नेनयथाशक्त्याद्विजोत्तम १९ तावद्वर्षसहस्राणिस्वर्गलोकेमहीयते तिलस्नायीतिलोद्वर्तीतिलहोमीतिलोदकी २० तिलभु
क्तिलदाताचषट्तिलाःपापनाशकाः नारदउ० कृष्णकृष्णमहाबाहोनमस्तेभक्तभावन २१ षट्तिलैकादशीभूतंकीदृशंफलमश्नुते सोपाख्यानंममब्रूहि
यदितुष्टोसिमाधव २२ श्रीकृष्णउ० शृणुब्रह्मन्यथावृत्तंदृष्टंतत्कथयामिते मृत्युलोकेपुराह्यासीद्ब्राह्मणीतत्रनारद २३ ब्रह्मचर्यरतानित्यंदेवपूजार-
तासदा मासोपवासनिरताममभक्ताचसर्वदा २४ कृष्णोपवाससंयुक्ताममपूजापरायणा शरीरंक्लेशितंनित्यमुपवासैर्द्विजोत्तम २५ दीनानांब्राह्मणानांच
कुमारीणांचभक्तितः गृहादिकंप्रयच्छंतीसर्वकालंमहामतिः २६ अतिकृच्छ्ररतासातुसर्वकालेषुवैद्विज शुद्धमस्याःशरीरंहिजातंतैःकृच्छ्रैर्नसंशयः २७ अ-
र्थिनेभैक्ष्यार्थंलोकंकायक्लेशेनवैतया नदत्तमन्नदानंहियेनतृप्तिःपराभवेत् २८ एतज्ज्ञात्वामयाब्रह्मन्मृत्युलोकमुपागतः कापिलंरूपमास्थायभिक्षापात्रेणया-
चिता २९ ब्राह्मण्युवा० कस्मात्त्वमागतोब्रह्मन्वदयस्मात्समागतः पुनरेवमयाप्रोक्तंदेहिभिक्षांचसुंदरि ३० तयाकोपेनमहतामृत्पिंडस्ताम्रभाजने क्षिप्तोयाव
तयादेव्यापुनःस्वर्गंगतोद्विज ३१ ततःकालेनमहतातापसीसामहाव्रता कदाचित्स्वर्गमायाताब्रह्मचर्यप्रभावतः ३२ मृत्पिंडस्यप्रभावेनगृहंप्राप्तं-
मनोरमम् संजातंचैवविप्रर्षेधान्यकोशविवर्जितम् ३३ गृहंयावन्निरीक्षेतनकिंचित्तत्रपश्यति तावद्गृहाद्विनिष्क्रांतामामागत्यचाब्रवीद्विज ३४

समद्युतौ ईदृश्यापुष्पवत्याचमाल्यवानतिमोहितः १९ शक्रस्यपरितोषायनृत्यार्थंतौसमागतौ गायमानौचतौतत्रह्यप्सरोगणसंगतौ २० नशक्तुगानंगायेतांचित्तभ्रमसमन्वितौ बद्धदृष्टीतथान्योन्यंकामबाणवशंगतौ २१ ज्ञात्वाखेरवर्षभस्तत्रसंगतंमानसंतयोः तालक्षालक्रिया-मानलोपादीतावभंजनात् २२ चिंतयित्वातुमघवानवज्ञानंतथात्मनः कुपितश्चतयोरित्थंशापंदास्यन्निदंजगौ २३ धिग्वांपापरतौमूढौवाज्ञाभंगकरौमम युवांपिशाचौभवतंदंपतीरूपधारिणौ २४ मृत्युलोकमनुप्राप्तौभुंजानौकर्मणःफलम् एवंमघवताशप्तावुभौदुःखितमानसौ २५ हिमवंतंगिरिंप्राप्ताविंद्रशापविमोहितौ उभौपिशाचतांप्राप्तौदारुणंदुःखमेवच २६ संतप्तमानसौतत्रमहाकृच्छ्रगतावुभौ गंधंरसंचस्पर्शंचनजानंतौविमोहितौ २७ पीड्यमानौतुदाहेनदेहपातकरेणच तौननिद्रांसुखंप्राप्तौकर्मणातेनपीडितौ २८ परस्परंवदमानौचेरतुर्गिरिगह्वरम् पीड्यमानौतुशीतेनतुषारप्रभवेनतौ २९ दंतघर्षंप्रकुर्वाणौरोमांचिततनूधरौ ऊचेपिशाचःशीतार्तःस्वपत्नींतुपिशाचिकाम् ३० किमावाभ्यांकृतंपापमत्युग्रंदुःखदायकम् येनप्राप्तंपिशाचत्वंस्वेनदुष्कृतकर्मणा ३१ नरकंदारुणंमत्वापिशाचत्वंचगर्हितम् तस्मात्सर्वप्रयत्नेनपापंनैवसमाचरेत् ३२ इतिचिंतापरौतत्रह्यास्तांदुःखेनकर्षितौ दैवयोगात्तयोःप्राप्तामाघस्यैकादशीसिता ३३ जयानाम्नीतिविख्यातातिथीनामुत्तमातिथिः तस्मिन्दिनेतुसंप्राप्तेताचाहारविवर्जितौ ३४ आसातेतत्रनृपतेजलपानविवर्जितौ नकृतोजीवघातश्चनपत्रफलभ-क्षणम् ३५ अश्वत्थस्यसमीपेतुपतितौदुःखसंयुतौ रविरस्तंगतोराजंस्तथैवस्थितयोस्तयोः ३६ आगतैवनिशाघोरादारुणा शीतधारिणी वेप-

गाश्चजरायुजाः १ नेषांकर्त्ताविकर्त्ताचपलकःक्षयकारकः माघस्यकृष्णपक्षेतुषट्तिलाःकथितात्वया २ शुक्लेचैकादशीयाचकथयस्वप्र-
सादतः किन्नामकोविधिस्तस्याःकोदेवस्तत्रपूज्यते ३ श्रीकृष्णउवाच कथयिष्यामिराजेंद्र शुक्लेमाघस्ययाभवेत् जयानाम्नीतिविख्या-
तासर्वपापहरापरा ४ पवित्रापापहंत्रीचपिशाचत्वविनाशिनी नैवतस्याव्रतेचीर्णेप्रेतत्वंजायतेनृणाम् ५ नातःपरतराकाचित्पापघ्नी
मोक्षदायिनी एतस्मात्कारणाद्राजन्कर्तव्येयंप्रयत्नतः ६ श्रूयतांराजशार्दूलकथांपौराणिकींशुभां पंकजेचपुराणेस्यामहिमाकथितास-
था ७ एकदानागलोकेवैइंद्रोराज्यंचकारह देवाश्चतत्रसौख्येननिवसंतिमनोरमे ८ पीयूषपाननिरताह्यप्सरोगणसेविताः नंदनंतुव-
नंतत्रपारिजातोपशोभितम् ९ रमयंतिरमंतत्राप्यप्सरोभिर्दिवौकसः एकदारममाणोसौदेवेंद्रःस्वेच्छयानृप १० नर्तयामासहर्षात्पंचा-
शत्कोटिनायिकाः गंधर्वास्तत्रगायंतिगंधर्वःपुष्पदंतकः ११ चित्रसेनश्चतत्रैवचित्रसेनसुतातथा मालिनीतिचनाम्नातुचित्रसेनस्यकामिनी
१२ मालिन्यांतुसमुत्पन्नःपुष्पवानितिनामतः पुष्पदंतस्यपुत्रोवैमाल्यवान्नामनामतः १३ गंधर्वीपुष्पवत्याख्यामाल्यवत्यतिमोहिता का-
मस्यचशरैस्तीक्ष्णैर्विद्धांगीसाबभूवह १४ तयाभ्रूचकटाक्षैश्चमाल्यवांस्तुवशीकृतः लावण्यरूपसंपन्नातस्यारूपंनृपशृणु १५ बाहूतस्यास्तु
कामेनकंठपाशौकृताविव चंद्रवद्वदनंतस्यानयनेश्रवणायते १६ कर्णौतुशोभितौतस्याःकुंडलाभ्यांनृपोत्तम कंबुग्रीवायुताचैवदिव्याभ-
रणभूषिता १७ पीनोन्नतौकुचौतस्यामुष्टिमात्रंचमध्यमम् नितंबौविपुलौतस्याविस्तीर्णंजघनस्थलम् १८ चरणौशोभमानौतौरक्तोत्पल

अथफाल्गुनकृष्णैकादशीकथा युधिष्ठिरउवाच फल्गुनस्यासितेपक्षेकिन्नाम्न्येकादशीभवेत् वासुदेवप्रसादेनकथयस्वममाग्रतः १
श्रीकृष्णउवाच कथयिष्यामिराजेंद्रकृष्णायाफाल्गुनीभवेत् विजयेतिचसाप्रोक्ताकर्तॄणांजयदासदा २ तस्याश्चव्रतमाहात्म्यंसर्वपापह-
रंपरम् नारदःपरिपप्रच्छब्रह्मणंकमलासनम् ३ फाल्गुनस्यासितेपक्षेविजयानामयातिथिः तस्याव्रतंसुरश्रेष्ठकथयस्वप्रसादतः ४ इतिपृ
ष्टोनारदेनप्रत्युवाचपितामहः ब्रह्मोवाच शृणुनारदवक्ष्यामिकथांपापहरांपराम् ५ यन्नकस्यचिदाख्यातंमयैतद्विजयाव्रतम् पुरातन
व्रतंह्येतत्पवित्रंपापनाशनम् ६ जयंददातिविजयानृणांचैवनसंशयः रामस्तपोवनंयातोवर्षाण्येवचतुर्दश ७ न्यवसत्पंचवट्यांतु-
ससीतश्चसलक्ष्मणः तत्रैववसतस्तस्यराघवस्यमहात्मनः ८ रावणेनहृताभार्यासीतानाम्नीतपस्विनी तेनदुःखेनरामोसौमोहमभ्या
गतस्तदा ९ भ्रमन्जटायुषंतत्रददर्शविगतायुषम् कबंधोनिहतःपश्चाद्भ्रमतारण्यमध्यतः १० राज्ञेविज्ञाप्यतत्सर्वंसोपिमृत्युवशंगतः
सुग्रीवेणसमंसख्यमजर्य्यंसमजायत ११ वानराणामनीकानिरामार्थंसंगतानिवै ततोहनूमताहृष्टालंकोद्यानेतुजानकी १२ रामसंज्ञाप
नंतस्यैदत्तंकर्ममहत्कृतम् समेत्यरामेणपुनःसर्वंतत्रनिवेदितम् १३ अथश्रुत्वारामचंद्रोवाक्यंचैवहनूमतः सुग्रीवानुमतेनैवप्रस्थानं
समरोचयत् १४ सगत्वावानरैःसार्द्धंतीरंनदनदीपतेः दृष्ट्वाब्धिंदुस्तरंरामोविस्मितोभूत्कपिप्रियः १५ प्रोत्फुल्ललोचनोभूत्वालक्ष्मणो
वाक्यमब्रवीत् सौमित्रेकेनपुण्येनतीर्य्यतेवरुणालयः १६ अगाधसलिलःपूर्णोनक्रैर्भीमैःसमाकुलः उपायंनैवपश्यामियेनैवसुत-

मानौतुतौतत्रहिमेनचजडीकृतौ ३७ परस्परेणसंलग्नौगात्रयोर्भुजयोरपि ननिद्रांनरतिंतत्रनचसौख्यमविंदताम् ३८ एवंतौराजशार्दूलशा
पेनेंद्रस्यपीडितौ इत्थंतयोर्दुःखितयोर्निर्जगामतदानिशा ३९ जयायास्तुव्रतेचीर्णेरात्रौजागरणेकृते तयोर्व्रतप्रभावेनयथाह्यासीत्तथा-
शृणु ४० द्वादशीदिवसेप्राप्तेताभ्यांचीर्णेजयाव्रते विष्णोःप्रभावान्नृपतेपिशाचत्वंतयोर्गतम् ४१ पुष्पवतीमाल्यवांश्चपूर्वरूपौबभूवतुः
पुरातनस्नेहयुतौपूर्वालंकारसंयुतौ ४२ विमानमधिरूढौतावप्सरोगणसेवितौ स्तूयमानौतुगंधर्वैस्तुंबरुप्रमुखैस्तथा ४३ हावभावस-
मायुक्तौगतौनाकेमनोरमे देवेंद्रस्याग्रतोगत्वाप्रणामंचक्रतुर्मुदा ४४ तथाविधौतुतौदृष्ट्वामघवान्विस्मितोऽब्रवीत् इंद्रउवाच वदतंकेनपु-
ण्येनपिशाचत्वंविनिर्गतम् ४५ ममशापवशंप्राप्तौकेनदेवेनमोचितौ माल्यवानुवाच वासुदेवप्रसादेनजयायाःसुव्रतेनच ४६
पिशाचत्वंगतंस्वामिन्सत्यंभक्तिप्रभावतः इतिश्रुत्वावचस्तस्यप्रत्युवाचसुरेश्वरः ४७ पवित्रौपावनौजातौवंदनीयौममापिच हरिवा-
सरकर्त्तारौविष्णुभक्तिपरायणौ ४८ हरिभक्तिरतायेचशिवभक्तिरतास्तथा अस्माकमपितेमर्त्याःपूज्यावंद्यानसंशयः ४९ विहरस्वयथासौख्यं
पुष्पवत्यासुरालये एतस्मात्कारणाद्राजन्कर्त्तव्योहरिवासरः ५० जयाव्रतंतुराजेंद्रब्रम्हहत्यापहारकम् सर्वदानानिदत्तानियज्ञास्तेन
कृतानृप ५१ सर्वतीर्थेषुसस्नानःकृतंयेनजयाव्रतम् यःकरोतिनरोभक्त्याश्रद्धायुक्तोजयाव्रतम् ५२ कल्पकोटिशतंयावद्वैकुंठेमोदतेध्रुवम्
पठणाच्छ्रवणाद्राजन्नग्निष्टोमफलंलभेत् ५३ इतिश्रीभविष्योत्तरपुराणेमाघशुक्लैकादशीजयानाम्न्यामाहात्म्यंसंपूर्णम् ॥७॥

12

फा-कृ
१३

रात्रौजागरणंतत्र तस्याग्रेकारयेद्बुधः द्वादशीदिवसेप्राप्तेमार्तंडोस्योदयंप्रति ३५ नीत्वाकुंभंजलोद्देशेनद्यांप्रश्रवणेतथा तडागेस्था-
पयित्वातुपूजयित्वायथाविधि ३६ दद्यात्सदैवतंकुंभंब्राह्मणेवेदपारगे कुंभेनसहराजेंद्र महादानानिदापयेत् ३७ अनेनविधिना-
रामयूथपैःसहसंगतः कुरुव्रतंप्रयत्नेनविजयस्तेभविष्यति ३८ इतिश्रुत्वावचोरामोयथोक्तमकरोत्तदा कृतेव्रतेसविजयीबभूवरघु
नंदनः ३९ अनेनविधिनाराजन्येकुर्वंतिनराव्रतम् इहलोकेजयस्तेषांपरलोकेतथाक्षयः ४० एतस्मात्कारणात्पुत्रकर्तव्यंविज-
याव्रतम् विजयायाश्चमाहात्म्यंसर्वकिल्बिषनाशनम् ४१ पठनाच्छ्रवणात्तस्यवाजपेयफलंलभेत् ४२ इतिश्रीस्कंदपुराणेफा
ल्गुनकृष्णैकादशीविजयानाम्नीमाहात्म्यंसंपूर्णम् अथफाल्गुनशुक्लैकादशी मांधातोवाच वदब्रह्मन्महाभागयेनश्रेयोभ-
वेन्मम ईदृग्ब्रूहिब्रह्मयोनेयद्यनुग्रहतामयि १ सरहस्यंसेतिहासंव्रतानामुत्तमंव्रतम् वसिष्ठउवाच कथयाम्यधुनातुभ्यंसर्वव्रतफ
लप्रदम् २ आमलक्याव्रतंराजन्महापातकनाशनम् मोक्षदंसर्वलोकानांगोसहस्रफलप्रदम् ३ अत्रैवोदाहरंतीममितिहासंपुरा-
तनम् यथासुक्तिमनुप्राप्तोव्याधोहिंसासमन्वितः ४ वैदिशंनामनगरंहृष्टपुष्टजनाकुलम् ब्राह्मणैःक्षत्रियैर्वैश्यैःशूद्रैश्चसमलंकृत-
म् ५ रुचिरंनृपशार्दूलब्रह्मघोषनिनादितम् ननास्तिकोदुष्कृतिकस्तस्मिन्पुरवरेसदा ६ तत्रसोमान्वयेराजाविख्यातःशशबिंदुकः
राजाचैत्ररथोनामधर्मात्मासत्यसंगरः ७ नागायुतबलःश्रीमांछस्त्रशास्त्रार्थपारगः तस्मिन्शासतिधर्मज्ञेधर्मात्मनिधरांप्रभो ८

ए०मा
१३



12

रोभवेत् १७ लक्ष्मणउवाच आदिदेवस्त्वमेवासि पुराणपुरुषोत्तम बकदाल्भ्यो मुनिश्चात्र वर्त्तते द्वीपमध्यतः १८ अस्मात्स्थानाद्योजना
र्द्धमाश्रमस्तस्य राघव अनेन दृष्टा बह्माणो बहवो रघुनंदन १९ संपृच्छ गत्वा राजेंद्र पुराणमृषिपुंगवम् इति वाक्यं ततः श्रुत्वा लक्ष्मणस्या
तिशोभनम् २० जगाम राघवो द्रष्टुं बकदाल्भ्यं महामुनिम् प्रणनाम मुनिं मूर्ध्ना रामो विष्णुमिवामरः २१ मुनिर्ज्ञात्वा ततो रामं पुराणपुरुषोत्तम-
म् केनापि कारणेनैव प्रविष्टं मानुषीं तनुम् २२ उवाच स ऋषिस्तत्र कुतो राम त्वमागमः रामउवाच त्वत्प्रसादाद्दहो विप्र वरुणालयसन्नि-
धिम् २३ आगतोस्मि ससैन्योत्र लंकां जेतुं सराक्षसम् भवतश्चानुकूल्येन तीर्यते ब्धिर्यथा मया २४ तमुपायं वद मुने प्रसादं कुरु सत्व्रत
एतस्मात्कारणादेव द्रष्टुं त्वामहमागतः २५ मुनिरुवाच कथयिष्याम्यहं राम व्रतानामुत्तमं व्रतम् कृतेन येन सहसा विजयस्ते भविष्यति
२६ लंकां जित्वा राक्षसांश्च दीर्घां कीर्तिमवाप्स्यसि एकाग्रमानसो भूत्वा व्रतमेतत्समाचर २७ फाल्गुनस्यासिते पक्षे विजयैकादशी भवेत्
तस्या व्रते कृते राम विजयस्ते भविष्यति २८ निःसंशयं समुद्रं च तरिष्यसि सवानरः विधिस्तु श्रूयतां राम व्रतस्यास्य फलप्रदः २९ दशमी-
दिवसे प्राप्ते कुंभमेकं च कारयेत् हैमं वा राजतं वापि ताम्रं वाप्यथ मृन्मयम् ३० स्थापयेच्छोभितं कुंभं जलपूर्णं सपल्लवम् तस्योपरिन्यसेद्दे
वं हैमं नारायणं प्रभुम् ३१ एकादशी दिने प्राप्ते प्रातःस्नानं समाचरेत् निश्चलं स्थापयेत्कुंभं गंधमाल्यानुलेपनैः ३२ दाडिमैर्नारिकेलैश्च पूजये
च्च विशेषतः सप्तधान्यान्यधस्तत्र यवानुपरि विन्यसेत् ३३ गंधैर्धूपैस्तथा दीपैर्नैवेद्यैर्विविधैरपि कुंभाग्रे तद्दिनं राम नीयते भक्तिभावतः ३४

स्थितचेतसः २६ ततःप्रभातसमयेविविशुर्नगरंजनाः आधोपिगृहमागत्यबुभुजेशीतमानसः २७ ततःकालेनमहताव्याधःपंचत्वमागतः एका
दश्याःप्रभावेनरात्रौजागरणेनच २८ राज्यंप्रपेदेसमहच्चतुरंगबलान्वितम् जयंतीनामनगरीतत्रराजाविदूरथः २९ तस्मात्ततनयोजज्ञेनाम्नावक्रर
थोबली चतुरंगबलोपेतोधनधान्यसमन्वितः ३० दशायुतानिग्रामाणांबुभुजेभयवर्जितः तेजसादित्यसदृशःकांत्याचंद्रसमप्रभः ३१ पराक्रमेवि
ष्णुसमःक्षमयापृथिवीसमः धार्मिकःसत्यवादीचविष्णुभक्तिपरायणः ३२ ब्रह्मज्ञःकर्मशीलश्चप्रजापालनतत्परः यजतेविविधान्यज्ञान्सराजापर-
दर्पहा ३३ दानानिविविधान्येवप्रददातिचसर्वदा एकदामृगयांयातोदैवान्मार्गपरिच्युतः ३४ नदिशंनैवविदिशंवेत्तितत्रमहीपतिः उपधायचदोर्मूल
मेकाकीगहनेवने ३५ श्रांतश्चक्षुधितोसंतंसंविवेशमहीपतिः अत्रांतरेम्लेच्छगणाःपर्वतांतरवासभाक् ३६ आययौनत्रयत्रास्तेराजापरबलार्दनः
कृतवैरास्तेनराज्ञासर्वदेवोपतापिताः ३७ परिवार्यततस्तस्थूराजानंभूरिदक्षिणम् हन्यतांहन्यतांचायंपूर्ववैरविरुद्धधीः ३८ अनेननिहताःपु-
र्वेपितरोभ्रातरःसुताः पौत्राश्चभागिनेयाश्चमातुलाश्चनिपातिताः ३९ निष्कासिताश्चस्वस्थानाद्विक्षिप्ताश्चदिशोदश एतावदुक्त्वातेसर्वेतत्रैनंहं
तुमुद्यताः ४० पाशैश्चपट्टिशैःखड्गबाणैर्धनुषिसंस्थितैः सर्वतोरिगणास्तेचराजानंहंतुमुद्यताः ४१ सर्वाणिशस्त्राणिसमायांतितनवैशरीरेप्रविशं
तितस्य तेचापिसर्वेहतशस्त्रसंघाम्लेच्छाबभूवुर्गतदेहजीवाः ४२ यदापिचक्लिष्टुंतत्रनशेकुस्तेऽरयोभृशम् शस्त्राणिकुंठतांजग्मुःसर्वेषांह-
तचेतसाम् ४३ दीनाबभूवुस्तेसर्वेयेतंहंतुंसमागताः एतस्मिन्नेवकालेतु [illegible] शरीरतः ४४ निःसृताप्रमदात्वेकासर्वावयवशोभना-

कृपणानैवकुत्रापिदृश्यतेनैवनिर्धनः सकालःक्षेममारोग्यंतस्मिन्राज्यंप्रशासति ९ विष्णुभक्तिरतालोकास्तस्मिन्पुरवरेसदा हरिपूजारता
श्चैवराजाचापिविशेषतः १० नशक्तानैवकृष्णांचद्वादशींभुंजतेजनाः सर्वधर्मान्परित्यज्यहरिभक्तिपरायणाः ११ एवंसंवत्सरागणुर्बहवो
राजसत्तम जनस्यसौख्ययुक्तस्यहरिभक्तिरतस्यच १२ अथकालेनसंप्राप्ताद्वादशीपुण्यसंयुता फाल्गुनस्यसितेपक्षेनाम्नास्यामलकीस्मृता
१३ तामवाप्यजनाःसर्वेबालकास्थवरान्नृप नियमंचोपवासंचसर्वेचक्रुर्नराधिपो १४ महाफलंव्रतंज्ञात्वास्नानंकृत्वानदीजले त
त्रदेवालयेराजालोकयुक्तोमहाप्रभुः १५ पूर्णकुंभमवस्थाप्यछत्रोपानहसंयुतम् पंचरत्नसमायुक्तंदिव्यगंधाधिवासितम् १६ दीपमाला
न्वितंचैवजामदग्न्यसमन्वितम् पूजयामासुरव्यग्राधात्रींचमुनिभिर्जनाः १७ जमदग्न्यनमस्तेस्तुरेणुकानंदवर्द्धन आमलकीकृतच्छाय
भक्तिमुक्तिवरप्रद १८ धात्रिधातृसमुद्भूतेसर्वपातकनाशिनि आमलकिनमस्तुभ्यंगृहाणार्घ्योदकंमम १९ धात्रिब्रह्मस्वरूपासित्वंतु
रामेणपूजिता प्रदक्षिणविधानेनसर्वपापहराभव २० तत्रजागरणंचक्रुर्जनाःसर्वेसुभक्तितः एतस्मिन्नेवकालेतुव्याधस्तत्रसमागतः २१
क्षुधाश्रमपरिश्रान्तोमहाभारेणपीडितः कुटुंबार्थेजीवघातीसर्वधर्मबहिष्कृतः २२ जागरंतत्रतंपश्यदामलक्यांक्षुधातुरः दीपमालाकुलं
दृष्ट्वातत्रैवनिषसादसः २३ किमेतदितिसंचिंत्यप्राप्तोविस्मयतांभृशम् ददर्शकुंभंतत्रस्थंदेवंदामोदरंतथा २४ ददर्शामलकीवृक्षंतत्र-
स्थांश्चैवदीपकान् वैष्णवंचतथाख्यानंकथावपठतांनृणाम् २५ एकादश्याश्चमाहात्म्यंसकथावक्तधिनोपितत् जाग्रतस्तस्यसारात्रिर्गतादि

दूरंकिंचिद्वनाच्चैत्ररथाह्वयम् तस्मिन्वनेतुमुनयस्तपंतिबहुलंतपः ७ सहदेवैस्तुमघवारमतेमधुमाधवौ एकोमुनिवरस्तत्रमेधावीनाम-
नामतः ८ अप्सरास्तंमुनिवरंमोहनायोपचक्रमे मंजुघोषेतिविख्याताभावंतस्यविचिन्वती ९ क्रोशमात्रंस्थितातस्यभयादाश्रमसंन्नि-
धौगायंतीमधुरंसाधुपीडयंतीविपंचिकाम् १० गायंतीतामथालोक्यपुष्पचंदनवेष्टिताम् कामोपिविजयाकांक्षीशिवभक्तंमुनीश्वरम् ११
तस्याःशरीरसंसर्गेशिववैरमनुस्मरन् तुल्यभ्रुवौधनुःकोटीगुणंकृत्वाकटाक्षकम् १२ मार्गणौनयनेकृत्वापक्ष्मयुक्तौयथाक्रमं कुचौकृत्वा
पटकुटौविजयायोपसंस्थितः १३ मंजुघोषाभवत्तत्रकामस्यैववरूथिनी मेधाविनंमुनिंदृष्ट्वासापिकामेनपीडिता १४ यौवनोद्भिन्नदेहो-
सौमेधाव्यतिविराजते सितोपवीतसहितोदंडीस्मरइवापरः १५ मेधावीवसतिस्मासौच्यवनस्याश्रमेशुभे मंजुघोषास्थितातत्रदृष्ट्वातंमुनि
पुंगवम् १६ मदनस्यवशंप्राप्तामंदंमंदमगायत रणद्वलयसंयुक्तासिंजन्नूपुरमेखला १७ गायंतींभावसंयुक्तांविलोक्यमुनिपुंगवः म-
दनेनससैन्येननीतोमोहवशंबलात् १८ मंजुघोषासमागम्यमुनिंदृष्ट्वातथाविधम् हावभावकटाक्षैस्तुमोहयामासचांगना १९ अथ
संस्थाप्यवीणांसासस्वजेतंमुनीश्वरम् वल्लीवाकुलितावृक्षंवातवेगेनवेपिता २० सोपिरेमेतयासार्द्धंमेधावीमुनिपुंगवः तस्मिन्नेववनोद्देशेदृ
ष्ट्वातद्देहमुत्तमम् २१ शिवतत्वंगतंतस्यकामतत्ववशंगतः ननिशांनदिनंसोपिरमन्नजानातिकामुकः २२ बहुलस्तुगतःकालोमुनेराचा
रलोपकः मंजुघोषादेवलोकंगमनायोपचक्रमे २३ गच्छंतीप्रत्युवाचाथरमंतंमुनिपुंगवम् आदेशोदीयतांब्रह्मन्स्वधामगमनायमे २४





24

दिव्यगंधसमायुक्तादिव्याभरणभूषिता ४५ दिव्यमाल्यांबरधराभ्रुकुटीकुटिलानना स्फुलिंगाभ्यांचनेत्राभ्यांपावकंवमतीबहु ४६ चक्रोद्यत
कराचैवकालरात्रिरिवापरा अभ्यधावतसंक्रुद्धान्म्लेंच्छानसंतदुःखितान् ४७ निहताश्चयदाम्लेंच्छास्तेविकर्मरतास्तया ततोराजाविबु-
द्धःसन्ददर्शमहदद्भुतम् ४८ हतान्म्लेंच्छगणान्दृष्ट्वाराजाहर्षमथापसः इहकेनहताम्लेंछाअस्मंतवैरिणोमम ४९ केनचेदंमहत्कर्म
कृतमस्माद्धिताथिना एतस्मिन्नेवकालेतुवागुवाचाशरीरिणी ५० तंस्थितंनृपतिंदृष्ट्वानिष्कामंविस्मयान्वितम् शरणंकेशवादन्योना-
स्तिकोपिद्वितीयकः ५१ वनात्तस्मात्सकुशलीसमायातोपिभूमिपःकृ राज्यंचकारधर्मात्माधरायांदेवतेशवत् ५२ वसिष्ठउवाच
तस्मादामलकींराजन्येकुर्वंतिनरोत्तमाः तेषांतिवैष्णवंलोकंनात्रकार्याविचारणा ५३ इतिश्रीब्रह्मांडपुराणेफाल्गुनशुक्लैकादशी-
माहात्म्यंसंपूर्णम् अथचैत्रकृष्णैकादशीकथा युधिष्ठिरउवा० फाल्गुनस्यसितेपक्षेश्रुतासामलकीमया चैत्रस्यकृष्णपक्षेतुकिन्नामै-
कादशीभवेत् १ श्रीकृष्णउवाच शृणुराजेंद्रवक्ष्यामिअज्ञातंपापनाशनम् यल्लोमशोब्रवीत्पृष्टोमांधात्राचक्रवर्तिना २ मांधा
तोवाच भगवन्श्रोतुमिच्छामिलोकानांहितकाम्यया चैत्रमास्यसितेपक्षेकिन्नामैकादशीभवेत् ३ कोविधिःकिंफलंतस्याःकथयस्वप्रसा
दतः लोमशउवाच श्रूयतांराजशार्दूलकामदांसिद्धिदांतथा कथांविचित्रांशुभदांपापहांधर्मदायिनीम् ४ पुराचैत्ररथोद्देशेअप्सरोगण-
सेविते वसंतसमयेप्राप्तेपुष्पैराकुलितेवने ५ गंधर्वकन्यास्तत्रैवरमंतिसहकिन्नरैः पाकशासनमुख्याश्चक्रीडंतेचदिवौकसः ६ नापरंसुं-

तस्याव्रतेकृतेऋभुःपिशाचत्वंप्रयास्यति इत्युक्त्वातांसमेधावीजगामपितुराश्रमम् ४१ तमागतंसमालोक्यवचनंप्रत्युवाचह किमिंत
द्विहितंपुत्रत्वयापुण्यक्षयःकृतः ४२ मेधाव्युवाच पापंकृतंमहत्तातरमिताचाप्सरसामया प्रायश्चित्तंब्रूहितातयेनपापक्षयोभवेत् ४३
च्यवनउवाच चैत्रस्यचासितेपक्षेनाम्नावैपापमोचनी अस्याव्रतेकृतेपुत्रपापराशिःक्षयंव्रजेत् ४४ इतिश्रुत्वापितुर्वाक्यंकृतंतेनव्रतोत्त-
मम्. गतंपापंक्षयंतस्यपुण्ययुक्तोबभूवसः ४५ साप्येवंमंजुघोषाचकृत्वातद्व्रतमुत्तमम् पिशाचत्वविनिर्मुक्तापापमोचनिकाव्रतात् ४६
दिव्यरूपधरासापिगतानाकंवराप्सरा: लोमशउवाच इत्थंभूतप्रभावंहिपापमोचनिकाव्रतम् ४७ पापमोचनिकांराजन् येकुर्वंतिच-
मानवाः तेषांपापंच[illegible]सर्वंक्षयतांव्रजेत् ४८ पठणाच्छ्रवणाद्राजन्गोसहस्रफलप्रदा ब्रह्महाहेमहारीचसुरापोगुरुतल्पगः
४९ व्रतस्यचास्यकरणात्सापमुक्ताभवंतिते बहुपुण्यप्रदंह्येतत्करणाद्व्रतमुत्तमम् ५० इतिश्रीभविष्योत्तरपुराणेचैत्रकृष्णैकादशी-
पापमोचनीमाहात्म्यंसंपूर्णम् अथचैत्रशुक्लैकादशीकथा सूतउवाच देवकीनंदनंकृष्णंवसुदेवात्मजंहरिम् नमस्कृत्वाप्रव-
क्ष्यामिमहापातकहानितु १ युधिष्ठिरायकृष्णेनकथितानिमहात्मना एकादशीमहात्म्यानिनानापापहराणिच २ अष्टादशपुराणेभ्योवि-
विच्यसुमहात्मना चतुर्विंशतिसंख्यानिनानाख्यानैर्युतानिच ३ तानिवक्ष्यामिभोविप्राःशृणुध्वंसुसमाहिताः युधिष्ठिरउवाच
वासुदेवनमस्तुभ्यंकथयस्वममाग्रतः ४ चैत्रस्यशुक्लपक्षेतुकिन्नामैकादशीभवेत् श्रीकृष्णउवाच शृणुष्वैकमनाराजन्कथामेतांपुरातनी-





15

मेधाव्युवाच अद्यैवत्वंसमायाताप्रदोषादौवरानने यावत्प्रभातसंध्यास्यात्तावत्तिष्ठममांतिके २५ इतिश्रुत्वामुनेर्वाक्यंभयभीताबभूवसा पुनर्वैरमयामासतंमुनिंऋषिसत्तमम् २६ मुनिशापभयाद्भीताबहुलान्परिवत्सरान् वर्षाणांपंचपंचाशच्छतंमासान्दिनत्रयम् २७ सारेमे मुनिनातेननिशार्द्धमिवचाभवत् साचतंप्रत्युवाचाथतस्मिन्कालेगतंमुनिम् २८ आदेशोदीयतांब्रह्मन्गंतव्यंस्वगृहंमम मेधाव्युवाच प्रातःकालोधुनैवास्तेश्रूयतांवचनंमम कुर्वेसंध्यांदिनेयावत्तावत्त्वंवैस्थिराभव २९ इतिवाक्यंमुनेःश्रुत्वाभयेनचसमाकुला स्मितंकृत्वातु-साकिंचित्प्रत्युवाचसाविस्मिता ३० अप्सराउवाच कियत्प्रमाणाविप्रेंद्रतवसंध्यागतानघ मयिप्रसादंकृत्वातुगतःकालोविचार्यताम् ३१ इतितस्यावचःश्रुत्वाविस्मयोत्फुल्ललोचनः सध्यात्वाहृदिविप्रेंद्रःप्रमाणमकरोत्तदा ३२ समाश्चसप्तपंचाशद्गताममतयासह नेत्राभ्यांवि-स्फुलिंगान्समुंचमानोतिकोपनः ३३ कालरूपांचतांदृष्ट्वातपसःक्षयकारिणीम् दुःखार्जितंममतपोनीतंतदनयाक्षयम् ३४ सकंपोष्ठोमुनि-स्तत्रप्रत्युवाचाकुलेंद्रियः सतांशशापमेधावीत्वंपिशाचीभवेतिच ३५ धिक्त्वांपापेदुराचारेकुलटेपातकप्रिये तस्यशापेनसाद्यधाविनया-वनतास्थिता ३६ उवाचवचनंसाभ्रूःप्रसादंवांछतीमुनीन् प्रसादंकुरुविप्रेंद्रशापस्यानुग्रहंकुरु ३७ सतांसंगोहिफलतिवचोभिःसस-गेपदे त्वयासहममब्रह्मन्गताःस्युर्बहवःसमाः ३८ एतस्मात्कारणात्स्वामिन्प्रसादंकुरुसुव्रत मुनिरुवाच शृणुमेवचनंभद्रेशापानु-ग्रहकारकम् किंकरोमित्वयापापेक्षयंनीतंमहत्तपः ३९ चैत्रस्यकृष्णपक्षेयाभवेदेकादशीशुभा पापमोचनिकानामसर्वपापक्षयंकरी ४०

सानशर्मलभतेतुसा २२ चचारपतिनासार्द्धंललितागहनेवने बभ्रामविपिनेदुर्गेकामरूपःसराक्षसः २३ निर्घृणःपापनिरतोविरूपः
पुरुषादकः नसुखंलभतेरात्रौनदिवापापपीडितः २४ ललितादुःखितातीवपतिंदृष्ट्वातथाविधम् भ्रमंतीतेनसार्द्धंसारुदंतीगहनेव
ने २५ कदाचिदगमद्विंध्यशिखरेबहुकौतुके ऋष्यशृंगमुनेस्तत्र दृष्ट्वाश्रमपदंशुभम् २६ शीघ्रंजगामललिताविनयावनतास्थिता
प्रत्युवाचमुनिर्दृष्ट्वाकात्वंकस्यसुताशुभे २७ किमर्थंहिसमायातासत्यंवदममाग्रतः ललितोवाच वीरधन्वेतिगंधर्वःसुतातस्यमहा
त्मनः २८ ललितांनाममांविद्धिपत्यर्थमिहचागताम् भर्त्तामेशापदोषेणाराक्षसोभून्महामुने २९ रौद्ररूपोदुराचारस्तंदृष्ट्वानास्तिमेसु
खम् सांप्रतंशाधिमांब्रह्मन्प्रायश्चित्तंवदप्रभो ३० येनपुण्येनविप्रेंद्रराक्षसत्वाद्विमुच्यते ऋषिरुवाच चैत्रमासस्यरंभोरुशुक्लपक्षस्य-
सांप्रतम् ३१ कामदैकादशीनाम्नायाकृताकामदान्नृणाम् कुरुष्वतद्व्रतंभद्रेविधिपूर्वमयोदितम् ३२ तस्यव्रतस्ययत्पुण्यंतत्त्वभर्त्रेप्र-
दीयताम् दत्तेपुण्येक्षणात्तस्यशापदोषःप्रशाम्यति ३३ इतिश्रुत्वामुनेर्वाक्यंललिताहर्षिताभवत् उपोष्यैकादशींराजन्द्वादशीदिवसेत-
दा ३४ विप्रस्यैवसमीपेतुवासुदेवाग्रतःस्थिता वाक्यमूचेचललितास्वपत्युस्तारणायवै ३५ मयातुयद्व्रतंचीर्णंकामदायामुपोषणम्
तस्यपुण्यप्रभावेनगच्छत्वस्यपिशाचता ३६ ललितावचनादेववर्त्तमानोपितत्क्षणे गतपापःसललितोदिव्यदेहोबभूवह ३७ राक्षसत्वंग-
तंतस्यप्राप्तोगंधर्वतापुनः हेमरत्नसमाकीर्णोरेमेललितयासह ३८ तौविमानसमारूढौपूर्वरूपाधिकावुभौ दंपतीचापिशोभेतांकामदायाः





26

म् ५ वसिष्ठोयामकथयत्स्मादिलीपायपृच्छते दिलीपउवाच भगवन्श्रोतुमिच्छामिकथयस्वत्प्रसादतः ६ चैत्रेमासिसितेपक्षेकिंनामै
कादशीभवेत् वसिष्ठउवाच साधुपृष्टंनृपश्रेष्ठकथयामितवाग्रतः चैत्रस्यशुक्लपक्षेतुकामदानामनामतः ७ एकादशीपुण्यतमापापेंध
नदवानला शृणुराजन्कथामेतांपापघ्नींपुण्यदायिनीम् ८ पुराभोगिपुरेरम्येहेमरत्नविभूषिते पुंडरीकमुखानागानिवसंतिमदोत्कटाः
९ तस्मिन्पुरेपुंडरीकोराजाराज्यंकरोतिच गंधर्वैःकिन्नरैश्चैवअप्सरोभिःससेव्यते १० वराप्सरास्तुललितागंधर्वोललितस्तथा उभौ
रागेणसंयुक्तौदंपतीकामपीडितौ ११ रेमातेस्वगृहेरम्येधनधान्ययुतेसदा ललितायाश्चहृदयेपतिर्वसतिसर्वदा १२ हृदयेतस्यल
लितानित्यंवसतिभामिनी एकदापुंडरीकाद्याःक्रीडंतिसदसिस्थिताः १३ गीतमानंप्रकुरुतेललितोदयितांविना पदबंधेस्खलज्जि
ह्वोबभूवललितास्मरन् १४ मनोभावंविदित्वास्यकर्कटोनागसत्तमः पदबंधच्युतिंतस्यपुंडरीकेन्यवेदयत् १५ शशापललितंतत्रमदना
तुरचेतसम् राक्षसोभवदुर्बुद्धेक्रव्यादःपुरुषादकः १६ यतःपत्नीवशोजातोगायमानोममाग्रतः वचनात्तस्यराजेंद्ररक्षोरूपोबभूवह १७
रौद्राननोविरूपाक्षोदृष्टमात्रोभयंकरः बहुयोजनविस्तीर्णोमुखंकंदरसन्निभम् १८ चंद्रसूर्यनिभेनेत्रेग्रीवापर्वतसन्निभा नासारंध्रे-
तुविवरेअधरौयोजनार्द्धकौ १९ शरीरंतस्यराजेंद्रउच्छ्रितंयोजनाष्टकम् ईदृशोराक्षसःसोभूद्भुंजानःकर्मणःफलम् २० ललितातम-
थालोक्यस्वपतिंविकृताकृतिम् चिंतयामासमनसादुःखेनमहतार्दिता २१ किंकरोमिक्वगच्छामिपतिःपापेनपीडितः इतिसंस्मृत्यमन

कन्यावित्तेनजीवंतियेनराःपापमोहिताः १४ तेनरानरकेयांतियावदाभूतसंप्लवम् तस्मात्सर्वप्रयत्नेननग्राह्यंकन्यकाधनम् १५ यश्चगृ-
ह्णातिलोभेनकन्याक्रीत्वाचतद्धनम् सोन्यजन्मनिराजेंद्रओतुर्भवतिनिश्चितम् १६ कन्यांवित्तेनयोदद्याद्यथाशक्तिस्वलंकृताम् तत्पुण्य-
संख्यांकर्तुंहिचित्रगुप्तोभवत्यलम् १७ तत्फलंसमवाप्नोतिनरःकृत्वावरूथिनीम् कांस्यंमांसंमसूरान्नंचणकान्कोद्रवांस्तथा १८ शाकंमधु
परान्नंचपुनर्भोजनमैथुने वैष्णवोव्रतकर्ताचदशम्यांदशवर्जयेत् १९ द्यूतक्रीडांचनिद्रांचतांबूलंदंतधावनम् परापवादंपैशून्यंपतितैःस
हभाषणम् २० क्रोधंचैवानृतंवाक्यमेकादश्यांविवर्जयेत् कांस्यंमांसंमसूरांश्चक्षौद्रंवितथभाषणम् २१ व्यायामंचप्रवासंचपुनर्भोजनमै
थुने क्षौद्रंतैलंपरान्नंचद्वादश्यांपरिवर्जयेत् २२ अनेनविधिनाराजन्विहितायैर्वरूथिनी सर्वपापक्षयंकृत्वादद्यात्सांतेक्षयांगतिम् २३
रात्रौजागरणंकृत्वापूजितोयैर्जनार्दनः सर्वपापविनिर्मुक्तास्तेयांतिपरमांगतिम् २४ तस्मात्सर्वप्रयत्नेनकर्तव्यापापभीरुभिः क्षपारित्तन
याब्दीनैर्नरदेववरूथिनी २५ पठनाच्छ्रवणाद्राजन्गोसहस्रफलंलभेत् सर्वपापविनिर्मुक्तोविष्णुलोकेमहीयते २६ इतिश्रीभ-
विष्योत्तरपुराणेवैशाखकृष्णावरूथिनीनाम्न्यैकादशीमाहात्म्यंसंपूर्णम् अथवैशाखशुक्लैकादशीकथा युधिष्ठिरउवाच वैशाखशु-
क्लपक्षेतुकिन्नामैकादशीभवेत् किंफलंकोविधिस्तस्याःकथयस्वजनार्दन १ श्रीकृष्णउवाच कथयामिकथामेतांशृणुष्वंधर्मनंदन वसि
ष्ठोयामकथयत्पुरारामायपृच्छते २ रामउवाच भगवन्श्रोतुमिच्छामिव्रतानामुत्तमंव्रतम् सर्वपापक्षयकरंसर्वदुःखनिकृंतनम् ३





17

प्रभावतः ३९ इतिज्ञात्वानृपश्रेष्ठ कर्तव्यैषाप्रयत्नतः लोकानांचहितार्थायतवाग्रेकथितामया ५० ब्रह्महत्यादिपापघ्नीपिशाचत्वविनाशि-
नी नातःपरतराकाचित्त्रैलोक्येसचराचरे ५२ पठनाच्छ्रवणाद्वापिवाजपेयफलंलभेत् ५३ इतिश्रीवराहपुराणेचैत्रशुक्लाकामदानामैका-
दशीमाहात्म्यंसंपूर्णम् अथवैशाखकृष्णैकादशीकथा युधिष्ठिरउवाच वैशाखस्यासितेपक्षेकिन्नामैकादशीभवेत् महिमानंकथयमे
वासुदेवनमोस्तुते १ श्रीकृष्णउवाच सौभाग्यदायिनीराजन्इहलोकेपरत्रच वैशाखकृष्णपक्षेतुनाम्नाचैववरूथिनी २ वरूथिन्या
व्रतेनैवसौख्यंभवतिसर्वदा पापहानिश्चभवतिसौभाग्यप्राप्तिरेवच ३ दुर्भगापिकरोत्येनांस्त्रीसौभाग्यमवाप्नुयात् लोकानांचैवसर्वेषांभु-
क्तिमुक्तिप्रदायिनी ४ सर्वपापहरानॄणांगर्भवासनिकृंतनी वरूथिन्याव्रतेनैवमांधातास्वर्गतिंगतः ५ धुंधुमारादयश्चान्येराजानोबहवस्त-
था ब्रह्मकपालनिर्मुक्तोबभूवभगवान्भवः ६ दशवर्षसहस्राणितपस्तप्यतियोनरः तत्तुल्यंफलमाप्नोतिवरूथिन्याव्रतादपि ७ श्रद्धावा-
न्यस्तुकुरुतेवरूथिन्याव्रतंनरः वांछितंलभतेसोपिइहलोकेपरत्रच ८ पवित्रापावनीह्येषामहापातकनाशिनी भुक्तिमुक्तिप्रदाह्येषाक-
र्तॄणांनृपसत्तम ९ अश्वदानान्नृपश्रेष्ठगजदानंविशेषतः गजदानाद्भूमिदानंतिलदानंततोधिकम् १० ततःस्वर्णदानंतुअन्नदानंत-
तोधिकम् अन्नदानात्परंदानंनभूतंनभविष्यति ११ पितृदेवमनुष्याणांतृप्तिरन्नेनजायते तत्समंकविभिःप्रोक्तंकन्यादानंनृपोत्त-
म १२ धेनुदानंचतत्तुल्यमित्याहभगवान्स्वयम् प्रोक्तेभ्यःसर्वदानेभ्योविद्यादानंविशिष्यते १३ तत्फलंसमवाप्नोतिनरःकृत्वावरूथिनीम्

नजीव्यते २० तस्करत्वंसमारब्धंतत्रैवनगरेपुनः गृहीतोराजपुरुषैर्मुक्तश्चपितृगौरवात् २१ पुनर्बद्धःपुनर्मुक्तःपुनर्मुक्तःसत्तमैः धृष्टबुद्धिर्दुराचारो निबद्धोनिगडे दृढैः २२ कशाघातैस्ताडितश्चपीडितश्चपुनःपुनः नस्थातव्यंहिमंदात्मन्त्वयामद्देशगोचरे २३ एवमुक्तोततोराज्ञामोचितोदृढबधनात् निर्जगामभयात्तस्यगतोसौगहनंवनम् २४ क्षुत्तृषापीडितश्चायमितश्चेतश्चधावति सिंहवद्विजघानासौमृगसूकरचित्तलान् २५ आमिषाहारनिरतोवनेतिष्ठतिसर्वदा करेशरासनंकृत्वानिषंगंपृष्ठसंगतम् २६ अरण्यचारिणोहंतिपक्षिणश्चचतुष्पदान् चकोरांश्चमयूरांश्चकंकांस्तित्तिरमूषकान् २७ एतानन्यान्हंतिनित्यंधृष्टधीर्निर्गतघृणः पूर्वजन्मकृतैःपापैर्निमग्नःपापकर्दमे २८ दुःखशोकसमाविष्टश्चिंतयत्सोप्यहर्निशम् कौंडिन्यस्याश्रमपदंप्राप्तःपुण्यवशात्कचित् २९ माधवेमासिजाह्नव्यांकृतस्नानंतपोधनं आससाद धृष्टबुद्धिःशोकभारेणपीडितः ३० तद्वस्त्रबिंदुस्पर्शेनगतपाप्माहताशुभः कौंडिन्यस्याग्रतःस्थित्वाप्रत्युवाचकृतांजलिः ३१ धृष्टबुद्धिरुवाच प्रायश्चित्तंवदब्रह्मन् विनायत्नेनयद्भवेत् आजन्मकृतपापस्यनास्तिवित्तंममाधुना ३२ ऋषिरुवाच शृणुष्वैकमनाभूत्वायेनपापक्षयस्तव वैशाखस्यसितेपक्षेमोहिनीनामनामतः ३३ एकादशीव्रतंतस्याःकुरुमद्वाक्यनोदितः मेरुतुल्यानिपापानिक्षयंनयतिदेहिनाम् ३४ बहुजन्मार्जितान्येषामोहिनीसमुपोषिता इतिवाक्यंमुनेःश्रुत्वाधृष्टबुद्धिर्हसन्हृदि ३५ व्रतंचकारविधिवत्कौंडिन्यस्योपदेशतः कृतेव्रतेनृपश्रेष्ठहतपापोबभूवसः ३६ दिव्यदेहस्त

मयादुःखानि भुक्तानि सीताविरहजानि वै ततोहं भयभीतोस्मि पृच्छामित्वां महामुने ४ वसिष्ठ उवाच साधु पृष्टं त्वया राम तवैषा नैष्ठिकी मतिः त्वन्नामग्रहणेनैव पूतो भवति मानवः ५ तथापि कथयिष्यामि लोकानां हितकाम्यया पवित्रं पावनानां च व्रतानामुत्तमं व्रतम् ६ वैशाखस्य सिते पक्षे द्वादशी रामया भवेत् मोहिनी नाम या प्रोक्ता सर्वपापहरा परा ७ मोहजालात्प्रमुच्येत पातकानां समूहतः अस्या व्रतप्रभावेन सत्यं सत्यं वदाम्यहम् ८ अतस्त्वत्कारणाद्राम कर्त्तव्या भवादृशैः पातकानां क्षयकरी महादुःखविनाशिनी ९ शृणुष्वैकमना राम कथां पुण्यप्रदां शुभाम् अस्याः श्रवणमात्रेण महापापं प्रणश्यति १० सरस्वत्यास्तटे रम्ये पुरी भद्रावती शुभा द्युतिमान्नाम नृपतिस्तत्र राज्यं करोति वै ११ सोमवंशोद्भवो राजा धृतिमान्सत्यसंगरः तत्र वैश्यो निवसति धनधान्यसमृद्धिमान् १२ धनपाल इति ख्यातः पुण्यकर्मप्रवर्त्तकः प्रपासत्राद्यायतनतडागारामकारकः १३ विष्णुभक्तिरतः शांतस्तस्यासन्पंच पुत्रकाः सुमना द्युतिमांश्चैव मेधावी सुकृती तथा १४ पंचमो धृष्टबुद्धिश्च महापापरतः सदा वारस्त्रीसंगतिरतो विटगोष्ठीविशारदः १५ द्यूतादिव्यसनासक्तः परस्त्रीरतिलालसः न देवान्नातिथीन्वृद्धान्पितॄंश्चैव द्विजानपि १६ अन्यायकर्त्ता दुष्टात्मा पितुर्द्रव्यक्षयंकरः अभक्ष्यभक्षकः पापः सुरापानरतः सदा १७ वेश्याकंठक्षिप्तबाहुर्भ्रमन्दृष्टश्चतुष्पथे पित्रा निष्काशितो गेहात्परित्यक्तश्च बांधवैः १८ स्वदेहभूषणान्येव क्षयं नीतानि तेन वै गणिकाभिः परित्यक्तो निंदितश्च धनक्षयात् १९ ततश्चिंतापरो जातो वस्त्रहीनः क्षुधार्दितः किं करोमि क गच्छामि केनोपाये

निकुंभेकेदारदर्शनात् बदर्याश्रमयात्रायांतत्तीर्थसेवनादपि १३ यत्फलंसमवाप्नोतिकुरुक्षेत्रेरविग्रहे गजाश्वहेमदानानियज्ञे
कृत्स्नस्कुवर्णदः १४ यत्फलंसमवाप्नोतिअपरायांव्रतान्नरः अर्द्धप्रसूतांगांदत्वाकुवर्णवसुधांतथा १५ नरस्तत्फलंमाप्नोतिअ
पराव्रतसेवनात् पापद्रुमकुठारोयंपापेंधनदवानलः १६ पापांधकारसूर्योयंपापसारंगकेसरी बुद्बुदाइवतोयेषुपुत्तिकाइवजं
तुषु १७ जायंतेमरणायैवएकादश्याव्रतंविना अपरांसमुपोष्यैवपूजयित्वात्रिविक्रमम् १८ सर्वपापविनिर्मुक्तोविष्णुलोकंप्र
जेन्नरः लोकानांचहितार्थायतवाग्रेकथितंमया १९ पठनाच्छ्रवणाद्राजन्सर्वपापैःप्रमुच्यते २० इतिश्रीब्रह्मांडपुराणेज्येष्ठकृष्णैका
दशीअपरानाम्नीमाहात्म्यंसंपूर्णम् अथज्येष्ठशुक्लैकादशीकथा भीमसेनउवाच पितामहमहाबुद्धेशृणुमेपरमंवचः युधिष्ठिर-
श्चकुंतीचतथाद्रुपदनंदिनी १ अर्जुनोनकुलश्चैवसहदेवस्तथैवच एकादश्यांनभुंजंतिकदाचिदपिसुव्रत २ तेमांब्रुवंतिवैनित्यंमा
भुंक्ष्वत्वंवृकोदर अहंतानब्रुवंतातबुभुक्षादुःसहामम ३ दानंदास्यामिविधिवत्पूजयिष्यामिकेशवम् विनोपवासंलभ्येतकथमेका
दशीव्रतम् ४ भीमसेनवचःश्रुत्वाव्यासोवचनमब्रवीत् व्यासउवाच यदिस्वर्गोस्त्यभीष्टस्तेनरकोदुष्टएवच ५ एकादश्यांनभोक्त-
व्यंपक्षयोरुभयोरपि भीमसेनउवाच पितामहमहाबुद्धेकथयामितवाग्रतः ६ एकभुक्तेनशक्तोहमुपवासंकुतोमुने वृकनामा
पियोवह्निःससदाजठरेमम ७ अतीवार्थंयदाश्नामितदासमुपशाम्यति एकंशक्तोस्म्यहंकर्तुंचोपवासंमहामुने ८ येनैवप्राप्यतेस्व-



19

तोभूत्वागरुडोपरिसंस्थितः जगामवैष्णवंलोकंसर्वोपद्रववर्जितम् ३७ इतीदृशंरामचंद्रतमोमोहनिकृंतनम् नातःपरतरंकिंचि-
त्त्रैलोक्येसचराचरे ३८ यज्ञादितीर्थदानानिकलांनार्हंतिषोडशीम् पठनाच्छ्रवणाद्राजन्गोसहस्रफलंलभेत् ३९ इति-
श्रीकूर्मपुराणेवैशाखशुक्लमोहिनीनामैकादशीमाहात्म्यंसंपूर्णम् अथज्येष्ठकृष्णैकादशीकथा युधिष्ठिरउवाच ज्येष्ठस्य
कृष्णपक्षेतुकिन्नामैकादशीभवेत् श्रोतुमिच्छामिमाहात्म्यंतद्वदस्वजनार्दन १ श्रीकृष्णउवाच साधुपृष्टंत्वयाराजंल्लोकानांहित
काम्यया बहुपुण्यप्रदाह्येषामहापातकनाशिनी २ अपरानामराजेंद्रअपारफलदायिनी लोकेप्रसिद्धतांयातिअपरांयस्तुसेवते
३ ब्रह्महत्याभिभूतोपिगोत्रहाभ्रूणहातथा परापवादवादीचपरस्त्रीरसिकोपिच ४ अपरासेवनाद्राजन्विपाप्माभवतिध्रुवम् कू-
टसाक्ष्यंमानकूटंतुलाकूटंकरोतियः ५ कूटवेदंपठेद्विप्रःकूटशास्त्रंकरोतिच ज्योतिषीकूटगणकःकूटायुर्वेदकोभिषक् ६ कूटसाक्षी
समाह्येतेविज्ञेयानरकौकसः अपरासेवनाद्राजन्पापमुक्ताभवंतिते ७ क्षत्रियःक्षात्रधर्मंयस्त्यक्त्वायुद्धात्पलायते सयातिनरकं
घोरंस्वीयधर्मबहिष्कृतः ८ अपरासेवनाद्राजन्पापंत्यक्त्वादिवंव्रजेत् विद्यामधीत्ययःशिष्योगुरुनिंदांकरोतिच ९ महापातकयुक्तोपि
निरयंयातिदारुणम् अपरासेवनात्सोपिसद्गतिंप्राप्नुयान्नरः १० महिमानंचापरायाःशृणुराजन्वदाम्यहम् पुष्करत्रितयेस्नात्वा-
कार्तिक्यांयत्फलंलभेत् ११ गयायांपिंडदानेनपितृणांतृप्तिदोयथा सिंहस्थितेदेवगुरौगोतम्यांस्नानकोनरः १२ यत्फलंसमवाप्नो-

पुनःपुनः २५ एकादश्यांनभुंजीतपक्षयोरुभयोरपि एकादश्यांसितेपक्षेज्येष्ठस्योदकवर्जितम् २६ उपोष्यफलमाप्नोतितच्छृणुष्ववृकोद
र सर्वतीर्थेषुयत्पुण्यंसर्वदानेषुयत्फलम् २७ तत्फलंसमवाप्नोतिइमांकृत्वावृकोदर संवत्सरेचयाःप्रस्युःशुक्लाःकृष्णावृकोदर २८ उपो-
षितास्ताःसर्वाःस्युरेकादश्योनसंशयः धनधान्यवहाःपुण्याःपुत्रारोग्यफलप्रदाः २९ उपोषितानरव्याघ्रइतिसत्यंवदामिते यमदूतामहाकायाः
करालाःकृष्णपिंगलाः ३० दंडपाशधरारौद्रानोपसर्पंतितंनरम् पीतांबरधराःसौम्याश्चक्रहस्तामनोजवाः ३१ अंतकालेनयंत्येवमानवं-
वैष्णवींपुरीम् तस्मात्सर्वप्रयत्नेनसोपोष्योदकवर्जिता ३२ जलधेनुंतथादत्वासर्वपापैःप्रमुच्यते इतिश्रुत्वातदाचक्रुःपांडवाजनमेजय
३३ तथात्वमपिभूपालसोपवासार्चनंहरेः कुरुत्वंचप्रयत्नेनसर्वपापप्रशांतये ३४ करिष्याम्यद्यदेवेशजलवर्जमुपोषणम् भोक्ष्येपरेऽह्नि
देवेशह्यन्नंवातववासरात् ३५ इत्युच्चार्यततोमंत्रमुपवासपरोभवेत् सर्वपापविनाशायश्रद्धादमसमन्वितः ३६ मेरुमंदरमानंतुस्त्रि
योथपुरुषस्यवा सर्वतद्भस्मतांयातिएकादश्याःप्रभावतः ३७ सकांचनःप्रदातव्योघटोवस्त्रेणसंयुतः तोयस्यनियतंतस्यांकुरुतेवैसपुण्य
भाक् ३८ पलकोटिसुवर्णस्ययामेयामेश्रुतेफलम् स्नानंदानंजपंहोमंयदस्यांकुरुतेनरः ३९ तत्सर्वंचाक्षयंप्रोक्तमेतत्कृष्णस्यभाषित
म् किंवापरेणधर्मेणनिर्जलैकादशींनृप ४० उपोषिताचविधिवद्वैष्णवंपदमाप्नुयात् सुवर्णमन्नंवासांसियदस्यांसंप्रदीयते ४१ तस्यै
वचकुरुश्रेष्ठसर्वंचाप्यक्षयंभवेत् एकादशीदिनेयोन्नंभुंक्तेपापंभुनक्तिसः ४२ इहलोकेसचांडालोमृतःप्राप्नोतिदुर्गतिम् येप्रदास्यंतिदा

र्गास्सत्करोमियथातथम् तदेकंवदनिश्चित्ययेनश्रेयोहमाप्नुयाम् ९ व्यासउवाच श्रुतामेमानवाधर्मावैदिकाश्चश्रुतास्त्वया कलौयु
गेनशक्यंतेतेवैकर्त्तुंनराधिप १० सुखोपायंचाल्पधनमल्पक्लेशंमहाफलम् पुराणानांचसर्वेषांसारभूतंवदामिते ११ एकादश्यांनभु
जीतपक्षयोरुभयोरपि एकादश्यांनभुक्तेयानयातिनरकंतुसः १२ व्यासस्यवचनंश्रुत्वाकंपितोश्वत्थपत्रवत् भीमसेनोमहाबाहुर्भी
तोवाक्यमभाषत १३ भीमसेनउवाच पितामहनशक्तोहमुपवासेकरोमिकिम् ततोबहुफलंब्रूहिव्रतमेकंममप्रभो १४ व्यास
उवाच वृषस्थेमिथुनस्थेवाशुक्लाह्येकादशीभवेत् ज्येष्ठमासेप्रयत्नेनसोपोष्याजलवर्जिता १५ स्नानेचाचमनेचैववर्जंपिसोद
कंबुधः माषमात्रस्कवर्णस्ययत्रमज्जतिवैमणिः १६ एतदाचमनंप्रोक्तंपवित्रंकायशोधनम् गोकर्णकृतहस्तेनमाषमात्रंजलंपिबेत् १७
तन्न्यूनमधिकंपीत्वासुरापानसमंभवेत् उपयुंजीतनैवान्यंव्रतभंगोन्यथाभवेत् १८ उदयादुदयंयावद्वर्जयित्वातथोदकम् अप्रयत्ना
दवाप्नोतिद्वादशद्वादशीफलम् १९ प्रभातेविमलेजातेद्वादश्यांस्नानमाचरेत् जलंस्कवर्णंदत्वाचद्विजातिभ्योयथाविधि २० भुंजी
तकृतकृत्यस्तुब्राह्मणैःसहितोवशी एवंकृतेतुयत्पुण्यंभीमसेनश्शृणुष्वतत् २१ संवत्सरस्ययामध्येएकादश्योभवंतिवै तासांफलमवा
प्नोतिअत्रमेनास्तिसंशयः २२ इतिमांकेशवःप्राहशंखचक्रगदाधरः सर्वधर्मान्परित्यज्यमामेकंशरणंव्रज २३ एकादश्यांनिराहारान्न
रःपापात्प्रमुच्यते द्रव्यशुद्धिःकलौनास्तिसंस्कारस्मार्तएवच २४ वैदिकश्चकुतश्चास्तेप्राप्तेदुष्टेकलौयुगे किंतुतेबहुनोक्तेनवायुपुत्र

पानफलान्विताः ६१ दानान्यन्यानि देयानि जलधेनुर्विशेषतः भोजयित्वा ततो विप्रान् स्वयं भुंजीत वाग्यतः ६१ एवं यः कुरुते पूर्णां द्वाद-
शीं पापनाशिनीम् सर्वपापविनिर्मुक्तः पदं गच्छत्यनामयम् ६२ ततः प्रभृति भीमेन कृता ह्येकादशी शुभा पांडवद्वादशी नाम्ना लोके ख्याता
बभूव ह ३३ इति श्रीब्रह्मवैवर्तपुराणे ज्येष्ठशुक्लनिर्जलैकादशीमहात्म्यं संपूर्णम् अथ आषाढकृष्णैकादशीकथा युधिष्ठिर उवाच
ज्येष्ठशुक्ले निर्जलाया माहात्म्यं वै श्रुतं मया आषाढकृष्णपक्षे तु किन्नामैकादशी भवेत् १ कथयस्व प्रसादेन ममाग्रे मधुसूदन श्रीकृष्ण
उवाच व्रतानामुत्तमं राजन् कथयामि तवाग्रतः २ सर्वपापक्षयकरं भुक्तिमुक्तिप्रदायकम् आषाढस्यासिते पक्षे योगिनी नाम नामतः
३ एकादशी नृपश्रेष्ठ महापातकनाशिनी संसारार्णवमग्नानां पोतरूपा सनातनी ४ जगत्त्रये सारभूता योगिनी ति नराधिप कथयामि
कथां तस्याः पौराणीं पापहारिणीम् ५ अलकाधिपतिर्नाम्ना कुबेरः शिवपूजकः तस्यासीत्पुष्पबटुको हेममालीति नामतः ६ तस्य पत्नी सु
रूपा च विशालाक्षीति नामतः स तस्यां स्नेहसंयुक्तः कामपाशवशं गतः ७ मानसात्पुष्पनिचयमानीय स्वगृहे स्थितः पत्नीप्रेमसमायुक्तो
न कुबेरालयं गतः ८ कुबेरो देवसदने करोति शिवपूजनम् मध्यान्हसमये राजन् पुष्पाणि प्रसमीक्षते ९ हेममाली स्वभवने रमते कांतया
सह यक्षराट् प्रत्युवाचाथ कालातिक्रमकोपितः १० कस्मान्नायाति भो यक्षा हेममाली दुरात्मवान् निश्चयः क्रियतामस्य प्रत्युवाच पुनः
पुनः ११ यक्षा ऊचुः वनिताकामुको गेहे रमते स्वेच्छया नृप तेषां वाक्यं समाकर्ण्य कुबेरः कोपपूरितः १२ आह्वयामास तं तूर्णं बटुकं हेममा-

नानिद्वादशींसमुपोष्यच ४३ ज्येष्ठमासेसितेपक्षेप्राप्स्यंतिपरमंपदम् ब्रह्महामद्यपस्तेनोगुरुद्वेषीसदानृती ४४ मुच्यंतेपातकैःसर्वै
र्द्वादशीयैरुपोषिता विशेषंशृणुकौंतेयनिर्जलैकादशीदिने ४५ यत्कर्तव्यंनरैःस्त्रीभिःश्रद्धादमसमन्वितैः जलशायीतुसंपूज्योदेया
धेनुश्चतन्मयी ४६ प्रत्यक्षंवानृपश्रेष्ठघृतधेनुमथापिवा दक्षिणाभिश्चश्रेष्ठाभिर्मिष्टान्नैश्चपृथग्विधैः ४७ तोषणीयाःप्रयत्नेन
द्विजाधर्मभृतांवर तुष्टोभवतिवैक्षिप्रंतैस्तुष्टैर्मोक्षदोहरिः ४८ आत्मद्रोहःकृतस्तैस्तुयैर्नैषासमुपोषिता पापात्मानोदुराचारादुष्टास्ते
नात्रसंशयः ४९ कुलानांचशतंसाग्रमनाचाररतंसदा आत्मनासहसन्नीतंवासुदेवस्यमंदिरम् ५० शांतैर्दानपरैश्चैवअर्चद्भिश्चत
थाहरिम् कुर्वद्भिर्जागरंरात्रौयैर्नरैःसमुपोषिता ५१ अन्नंपानंतथागावोवस्त्रंशय्यासनंशुभम् कमंडलुस्तथाछत्रंदातव्यंनिर्जला
दिने ५२ उपानहौचयोदद्यात्पात्रभूतेद्विजोत्तमे ससौवर्णेनयानेनस्वर्गलोकेव्रजेद्ध्रुवम् ५३ यश्चेमांशृणुयाद्भक्त्यायश्चापिपरिकीर्त
येत् उभौतौस्वर्गिणौस्यातांनात्रकार्याविचारणा ५४ यत्फलंतुसिनीवाल्यांराहुग्रस्तेदिवाकरे कृत्वाश्राद्धंलभेन्मर्त्यस्तदस्याःश्रवणादपि ५५
नियमंचप्रकुर्वीतदंतधावनपूर्वकम् एकादश्यांनिराहारोवर्जयिष्यामिवैजलम् ५६ केशवप्रीणनार्थायअन्यदाचमनादृते द्वादश्यांदेवदे
वेशःपूजनीयस्त्रिविक्रमः ५७ गंधपुष्पैस्तथादीपैर्वारिभिःप्रीणयेद्धरिम् पूजयित्वाविधानेनमंत्रमेनमुदीरयेत् ५८ देवदेवहृषीके
शसंसारार्णवतारक उदकुंभप्रदानेननयमांपरमांगतिम् ५९ ततःकुंभाःप्रदातव्याब्राह्मणेभ्यःस्वशक्तितः सान्नावस्त्रयुताःश्रीमन्तो

मार्कंडेयउवाच त्वयासत्यमिहप्रोक्तंनासत्यंभाषितंयतः अतोव्रतोपदेशंतेकरिष्यामिशुभप्रदम् ३० आषाढेकृष्णपक्षेसंयोगिनीव्र-तमाचर अस्यव्रतस्यपुण्येनकुष्ठात्संमुच्यसेध्रुवम् ३१ इतिवाक्यंमुनेःश्रुत्वादंडवत्पतितोभुवि उत्थापितश्चमुनिनाबभूवातीवहर्षि-तः ३२ मार्कंडेयोपदेशेनकृतंतेनव्रतोत्तमम् तद्व्रतस्यप्रभावेनदेवरूपोबभूवसः ३३ संयोगंकांतयालेभेबुभुजेसौख्यमुत्तमम् ईदृ-ग्विधंनृपश्रेष्ठकथितंयोगिनीव्रतम् अष्टाशीतिसहस्राणिद्विजान्भोजयतेतुयः तत्फलंसमवाप्नोतियोगिनीव्रतकृन्नरः ३५ महापाप-प्रशमनीमहापुण्यफलप्रदा शुचौकृष्णैकादशीचकथितायोगिनीनृप ३६ इतिश्रीब्रह्मवैवर्त्तेआषाढकृष्णैकादशीयोगिनीनाममाहा-त्म्यंसंपूर्णम् अथआषाढशुक्लैकादशीकथा युधिष्ठिरउवाच आषाढस्यसितेपक्षेकिन्नामैकादशीभवेत् कोदेवःकोविधिस्तस्याए-तदाख्याहिकेशव १ श्रीकृष्णउवाच कथयामिमहीपालकथामाश्चर्यकारिणीम् कथयामासयांब्रह्मानारदायमहात्मने २ नारदउ-वाच कथयस्वप्रसादेनविष्णोराराधनायमे आषाढशुक्लपक्षेतुकिन्नामैकादशीभवेत् ३ ब्रह्मोवाच वैष्णवोसिमुनिश्रेष्ठसाधुपृष्टंक-लिप्रिय नातःपरतरंलोकेपवित्रंहरिवासरात् ४ कर्तव्यंतुप्रयत्नेनसर्वपापापनुत्तये तस्मात्तेहंप्रवक्ष्यामिशुक्लएकादशीव्रतम् ५ एकाद-श्याव्रतंपुण्यंपापघ्नंसर्वकामदम् नकृतंयैर्नरैर्लोकेतेनरानिरयैषिणः ६ पद्मानामेतिविख्यातातनभस्येकादशीसिता हृषीकेशप्रीतयेतु कर्तव्यंव्रतमुत्तमम् ७ कथयामितवाग्रेहंकथांपौराणिकींशुभाम् यस्याःश्रवणमात्रेणमहापापंप्रणश्यति ८ मांधातानामराजर्षिर्वि-

लिनम् ज्ञात्वाकालात्ययंसोपिभयव्याकुललोचनः १३ आजगामनमस्कृत्य कुबेरस्याग्रतःस्थितः तंदृष्ट्वाधनदः क्रुद्धःकोपसंरक्तलो
चनः १४ प्रत्युवाचरुषाविष्टःकोपात्प्रस्फुरिताधरः धनदउवाच रेपापदुष्टदुर्वृत्त कृतवान्देवहेलनम् १५ अतोभवश्वित्रयुक्तो
वियुक्तःकांतयासदा अस्मात्स्थानादपध्वस्तोगच्छस्थानमथाधमम् १६ इत्युक्तवचनंतेनतस्मात्स्थानात्सपातसः महादुःखाभिभूत
श्चकुष्ठैःपीडितविग्रहः १७ नवैतोयंनभक्ष्यंचवनेघोरेलभत्यसौ नस्कंदिवसेतस्यननिद्रांलभतेनिशी १८ छायायांपीडितनतनुर्निदाघेस्यं
तपीडितः शिवपूजाप्रभावेनस्मृतिस्तस्यनलुप्यते १९ पातकेनाभिभूतोपिपूर्वकर्मस्मरत्यसौ भ्रममाणस्ततोगच्छद्धिमाद्रिंपर्वतोत्तम-
म् २० तत्रापश्यन्मुनिवरंमार्कंडेयंतपोनिधिम् यस्यायुर्विद्यतेराजन्ब्रह्मणोदिनसप्तकम् २१ आश्रमंसगतस्तस्यरूपेब्रह्मसदृः
समम् ववंदेचरणौतस्यदूरतःपापकर्मकृत् २२ मार्कंडेयोमुनिवरोदृष्ट्वातंकुष्ठिनंतदा परोपकारणार्थायसमाहूयेदमब्रवीत् २३ मार्कं-
डेयउवाच कस्मात्कुष्ठाभिभूतस्त्वंकु तोनिंद्यतरोह्यसि इत्युक्तःप्रत्युवाचेत्थंमार्कंडेयेनधीमता २४ हेममाल्युवाच यक्षराजस्यानुचरो
हेममालीतिनामतः मानसात्पुष्पनिचयमानीयप्रत्यहंमुने २५ शिवपूजनवेलायांकुबेरायसमर्पयत् एकस्मिन्दिवसेकाललोपश्चविहि
तोमया २६ पत्नीसौख्यप्रसक्तेनकामव्याकुलचेतसा ततःक्रुद्धेनशप्तोहंराजराजेनवैमुने २७ कुष्ठाभिभूतःसंजातोवियुक्तःकांतयास
ह अधुनातवसान्निध्यंप्राप्तोस्मिशुभकर्मणा २८ सतांस्वभावतश्चित्तंपरोपकरणक्षमम् इतिज्ञात्वामुनिश्रेष्ठशाधिमांचकृतैनसम् २९

नपूर्वकम् अपच्छकुशलंराज्येसमस्तंगेषुभूपतेः २६ निवेदयित्वाकुशलंपप्रच्छानामयींनृपः ततश्चमुनिनाराजापृष्टआगमनकारणः २७
अब्रवीन्मुनिशार्दूलंस्वस्यागमनकारणम् राजोवाच भगवन्धर्मविधिनाममपालयतोमहीम् २८ अनावृष्टिःसंप्रवृत्तानाहंवेद्म्यत्रकारण
म् संशयच्छेदनार्थोत्रत्वागतोहंतवांतिकम् २९ योगक्षेमविधानेनप्रजानांकुरुनिर्वृतिम् ऋषिरुवाच एतत्कृतयुगंराजन्युगानामुत्त-
मंमतम् ३० अत्रब्रह्मोत्तरालोकाधर्मश्चात्रचतुष्पदः अस्मिन्युगेतपोयुक्ताब्राह्मणानेतरेजनाः ३१ विषयेतवराजेंद्रवृषलोयत्तपस्यति
अकार्यकरणात्तस्यनवर्षतिबलाहकः कुरुतस्यवधेयत्नंयेनदोषःप्रशाम्यति ३२ राजोवाच नाहमेनंवधिष्यामितपस्यंतमनागसम्
धर्मोपदेशंकथयह्युपसर्गविनाशनम् ३३ ऋषिरुवाच यद्येवंतर्हिनृपतेकुरुष्वैकादशीव्रतम् शुचिमासेसितेपक्षेपद्मानामेतिविश्रु-
ता ३४ तस्याव्रतप्रभावेनसुवृष्टिर्भविताध्रुवम् सर्वसिद्धिप्रदाह्येषासर्वोपद्रवनाशिनी ३५ अस्याव्रतंकुरुनृपसप्रजःसपरिच्छदः इतिवा
क्यंमुनेःश्रुत्वाराजास्वगृहमागतः ३६ आषाढमासेसंप्राप्तेपद्माव्रतमथाकरोत् प्रजाभिःसहसर्वाभिश्चातुर्वर्ण्यसमन्वितः ३७ एवंकृतेव्र
तेराजन्प्रववर्षबलाहकः जलेनप्लाविताभूमिरभवत्सस्यमालिनी ३८ हृषीकेशप्रसादेनजनाःसौख्यंप्रपेदिरे एतस्मात्कारणादेवक-
र्तव्यंव्रतमुत्तमम् ३९ भुक्तिमुक्तिप्रदंचैवलोकानांसुखदायकम् पठनाच्छ्रवणादस्याःसर्वपापैःप्रमुच्यते ४०इयमेकादशीराजन्शय-
नीत्यभिधीयते विष्णोःप्रसादसिध्यर्थमस्यांचशयनव्रतम् ४१ कर्त्तव्यंराजशार्दूलजनैर्मोक्षेच्छुभिःसदा चातुर्मास्यव्रतारंभोप्यस्यामे

वस्यद्वंशसंभवः बभूवचक्रवर्त्तीससत्यसंधःप्रतापवान् ९ धर्मतःपालयामासप्रजाःपुत्रानिवौरसान् नतस्यराज्येदुर्भिक्षंनाथयोव्या
धयस्तथा १० निरातंकाःप्रजास्तस्यधनधान्यसमन्विताः नान्यायोपार्जितंद्रव्यंकोशेतस्यमहीपतेः ११ तस्यैवंकुर्वतोराज्यंबहुवर्षग
णोगतः अथोकदाचित्संप्राप्तेविपाकेपापकर्मणः १२ वर्षत्रयंतद्विषयेनववर्षबलाहकः तेनोद्विग्नाःप्रजास्तत्रबभूवुःक्षुधयार्दिताः
१३ स्वाहास्वधावषट्कारवेदाध्ययनवर्जिताः बभूवुर्विषयास्तस्यसस्याभावेनपीडिताः १४ अथप्रजाःसमागत्यराजानमिदमब्रुवन्
श्रूयतांवचनंराजन्प्रजानांहितकारकम् १५ आपोनाराइतिप्रोक्ताःपुराणेषुमनीषिभिः अयनंताभगवतस्तेननारायणःस्मृतः १६ प-
र्जन्यरूपीभगवान्विष्णुःसर्वगतःसदा सएवंकुरुतेवृष्टिंवृष्टेरन्नंततःप्रजाः १७ तदभावेननृपतेक्षयंगच्छंतिवैप्रजाः तथाकुरुनृ-
पश्रेष्ठयोगक्षेमोयथाभवेत् १८ राजोवाच सत्यमुक्तंभवद्भिश्चनमिथ्याभिहितंवचः अन्नंब्रह्ममयंप्रोक्तमन्नेसर्वंप्रतिष्ठितम् १९
अन्नाद्भवंतिभूतानिजगदन्नेनवर्त्तते इत्येवंश्रूयतेलोकेपुराणेबहुविस्तरे २० नृपापामपचारेणप्रजानांपीडनंभवेत् नाहंपश्याम्या
त्मकृतंदोषबुध्याविचारयन् २१ तथापिप्रयतिष्यामिप्रजानांहितकाम्यया इतिकृत्वामतिंराजापरिमेयबलान्वितः २२ नमस्कृत्यवि-
धातारंजगामगहनंवनम् चचारमुनिमुख्यानामाश्रमांस्तपसैधितान् २३ ददर्शाथब्रह्मसुतमृषिमंगिरसंनृपः तेजसाद्योतितदिशंद्विती
यमिवपद्मजम् २४ तंदृष्ट्वाहर्षतोराजाअवतीर्यचवाहनात् नमश्चक्रेस्यचरणौकृतांजलिपुटोवशी २५ मुनिस्तमभिनंद्याथस्वस्तिवाच

तथाष्टमी ५८ कर्कटाचैवसंक्रांतिस्तेषुकुर्याद्यथाविधि चतुर्धागृह्यवैचीर्णंचातुर्मास्यव्रतंनरः ५९ कार्तिकेशुक्लपक्षेतुद्वादश्यांतत्स-
मापयेत् तेषांफलानिवक्ष्यामिकर्तॄणांतेपृथक्पृथक् ६० आषाढेशुक्लपक्षेतुएकादश्यामुपोषितः चातुर्मास्यव्रतंकुर्याद्यत्किंचिदवनीपते ६१
नान्यथाचाब्दकंपापंविनिहंतिप्रयत्नतः नशैशवंनमौढ्यंचशुक्रगुर्वोर्नवार्धकम् ६२ खंडत्वेचिंतयेदादौचातुर्मास्यविधौनरः खंडांगव्यापीमार्तंडो
यद्यखंडाभवेत्तिथिः ६३ अशुचिर्वाशुचिर्वापियदिस्त्रीयदिवापुमान् व्रतमेकंनरःकृत्वामुच्यतेसर्वपातकैः ६४ असंक्रांतंतथामासंदैवेपि-
त्र्येचकर्मणि मलरूपमशौचंचवर्जयेन्मतिमान्नरः ६५ प्रतिवर्षंतुयःकुर्याद्व्रतंवैसंस्मरन्हरिम् देहांतेतिप्रदीप्तेनविमानेनार्कतेजसा ६६
मोदतेविष्णुलोकेसौयावदाभूतसंप्लवम् देवतायतनेनित्यंमार्जनंजलसेचनम् ६७ प्रलेपनंगोमयेनरंगवल्यादिकंतथा यःकरोतिनरश्रेष्ठ
चातुर्मास्यमतंद्रितः ६८ समाप्तेचयथाशक्त्याकृत्वाब्राह्मणभोजनम् सप्तजन्मसुविप्रेंद्रःसत्यधर्मपरोभवेत् ६९ दध्नाक्षीरेणचाज्येनक्षौद्र
णासितयातथा स्नापयेद्विधिनादेवंचातुर्मास्येजनाधिप ७० सयातिविष्णुसारूप्यंसुखमक्षय्यमश्नुते नृपेणभूमिर्दातव्यायथाशक्त्याचकांच-
नम् ७१ विप्रायदेवमुद्दिश्यसफलंचसदक्षिणम् अक्षय्यांल्लभतेभोगान्स्वर्गइंद्रइवापरः ७२ लोकंचसमवाप्नोतिविष्णोरत्रनसंशयः देवा
यहेमपद्मंतुदद्यान्नैवेद्यसंयुतम् ७३ गंधपुष्पाक्षताद्यैर्योदेवब्राह्मणयोरपि पूजांयःकुरुतेनित्यंचातुर्मास्येव्रतीनरः ७४ अक्षय्यंसुखमाप्नो
तिपुरंदरपुरंव्रजेत् यस्त्वेवंचतुरोमासान्तुलस्याहरिमर्चयेत् ७५ तुलसींकांचनींकृत्वाब्राह्मणायनिवेदयेत् कांचनेनविमानेनवैष्णवंल

चविधीयते ४२ युधिष्ठिरउवाच कथंकृष्णप्रकर्त्तव्यंश्रीविष्णोःशयनव्रतम् तद्व हिरूपयादेवचातुर्मास्यव्रतानिच ४३ श्रीकृष्णउ०
शृणुपार्थप्रवक्ष्यामिगोविंदशयनव्रतम् चातुर्मास्येचयान्युक्तान्यासंस्तानिव्रतानिच ४४ कर्कराशिगतेसूर्येशुचौशुक्लेतुपक्षके एका-
दश्यांजगन्नाथंस्वापयेन्मधुसूदनम् ४५ तुलाराशिस्थितेतस्मिन्पुनरुत्थापयेद्धरिं अधिमासेपिपतितेएषएवविधिःक्रमात् ४६ ना-
न्यथास्वापयेद्देवंनचैवोत्थापयेद्धरिम् आषाढस्यसितेपक्षेएकादश्यामुपोषितः ४७ चातुर्मास्यव्रतानांतुकुर्वीतपरिकल्पनम् एवंचप्रति
माविष्णोःस्थापयित्वायुधिष्ठिर ४८ स्नापयेद्वानिमांविष्णोःशंखचक्रगदाधराम् पीतांबरधरांसौम्यांपर्यंकेचसितेशुभे सितवस्त्रसमाच्छ-
न्नेसोपधानेयुधिष्ठिर ४९ इतिहासपुराणज्ञोब्राह्मणोवेदपारगः स्नापयित्वादधिक्षीरघृतक्षौद्रसितादिभिः ५० समालेप्यशुभैर्गंधैर्धू
पैर्दीपैश्चभूरिशः पूजयेत्कुसुमैःशस्तैर्मंत्रेणानेनपांडव ५१ शायितस्त्वंहृषीकेशपूजयित्वाश्रियासह प्रसादंकुरुदेवेशलक्ष्म्यास-
हजनार्दन ५२ सुप्तेत्वयिजगन्नाथजगत्सुप्तंचराचरम् एवंतांप्रतिमांविष्णोःस्थापयित्वायुधिष्ठिर ५३ तस्याएवाग्रतःस्थित्वागृण्ही-
यान्नियमान्नरः चतुरोवार्षिकान्मासान्देवस्योत्थापनावधि ५४ प्रातःसंध्यादिकंसर्वंनित्यकर्मसमाप्यच गृहीष्येनियमान्शुद्धान्नि-
र्विघ्नंकुरुमेप्रभो ५५ इतिसंप्रार्थ्यदेवेशंश्रद्धःसंशुद्धमानसः स्त्रीवानरोवामद्भक्तोधर्मार्थंचधृतव्रतः ५६ गृण्हीयान्नियमानेतान्दं
तधावनपूर्वकम् व्रतप्रारंभकालास्तुप्रोक्ताःपंचैवविष्णुना ५७ उपक्रमंचतुर्मासव्रतानांचनरैःशुचौ एकादशीद्वादशीचपौर्णिमाच

व्र॰ आ॰ श॰
२६

भोदेववरप्रसीद ९३ कृतनित्यक्रियोभूत्वासूर्यायार्घ्यंनिवेदयेत् सूर्यमंडलमध्यस्थंदेवंध्यात्वाजनार्दनम् ९४ समाप्तौकांचनंदद्याद्रक्त-
वस्त्रंचगांतथा आरोग्यंपूर्णमायुश्चकीर्तिंलक्ष्मींबलंलभेत् ९५ तिलहोमंतुयःकुर्याच्चातुर्मास्येदिनेदिने भक्त्याव्याहृतिभिर्मंत्रैर्गायत्र्या-
वाव्रतान्वितः ९६ अष्टोत्तरशतंचाथअष्टाविंशतिरेववा तिलपात्रंसमाप्तौतुदद्याद्विप्रायधीमते ९७ वाङ्मनःकायजनितैःपापैर्मुच्ये-
तसंचितैः नरोगैरभिभूयेतलभेत्संततिमुत्तमाम् ९८ देवदेवजगन्नाथवांछितार्थफलप्रद तिलपात्रंप्रदास्यामितेनपापंव्यपोहतु ९९
अन्नहोमंतुयःकुर्याच्चातुर्मास्यमतंद्रितः समाप्तौघृतकुंभंतुवस्त्रकांचनसंयुतम् १०० आरोग्यंकांतिमतुलांपुत्रसौभाग्यसंपदः शत्रुक्षयं
चलभतेब्रह्मणाप्रतिमोभवेत् १ अश्वत्थसेवांयःकुर्यात्सर्वपापैःप्रमुच्यते विष्णुभक्तोभवेत्पश्चाद्देतेयस्त्रंप्रदापयेत् २ सकांचनंब्रा-
ह्मणायनैवरोगान्सविंदते तुलसींधारयेद्यस्तुविष्णुप्रीतिकरांशुभाम् ३ विष्णुलोकमवाप्नोतिसर्वपापैःप्रमुच्यते ब्राह्मणान्भोजयेत्पश्चाद्वि-
ष्णुमुद्दिश्यपांडव ४ यस्तुकुसेहृषीकेशेदूर्वाममृतसंभवाम् सदाप्रातर्वहेन्मूर्ध्निशुद्धात्माचकृतुद्वये ५ मंत्रेणानेनराजेंद्रलक्ष्मीनाथ-
स्यतुष्टये त्वंदूर्वेमृतजन्मासिवंदितासिसुरासुरैः ६ सौभाग्यंसंततिंदत्वासद्यःकार्यकरीभव व्रतांतेचकुरुश्रेष्ठदूर्वांस्वर्णविनिर्मिताम् १०७
सार्घसर्वदलोपेतांसवस्त्रांद्विजपुंगवे प्रदद्याद्दक्षिणासार्द्धंमंत्रेणानेनसुव्रत ८ यथाशाखाप्रशाखाभिर्विस्तृतासिमहीतले तथाममापिसंता-
नंदेहित्वमजरामरम् ९ एवंव्रतंयःकुर्वीतचातुर्मास्यमतंद्रितः नचदुःखभयंतस्यनचरोगभयंभवेत् ११० नाशुभंप्राप्नुयाज्जातुपापेभ्यः

भतेगतिम् ७६ देवायगुग्गुलंयोवैदीपंचार्पयतेनरः सभोगीजायतेश्रीमान्तथासौभाग्यवानपि ७७ समासोधूपिकांदद्याद्दीपिकांचमहाम-
तं प्रदक्षिणांतुयःकुर्यान्नमस्कारंविशेषतः ७८ अश्वत्थस्याथवाविष्णोःकार्तिक्यामवधिर्भवेत् पादंपादांतरेन्यस्यकरौकृत्वाचसंयुतौ ७९
स्तुतिंवाचिहृदिध्यानंचतुरंगांप्रदक्षिणाम् संध्यादीपप्रदोयस्तु प्रांगणोद्विजदेवयोः ८० समासौदीपकंदद्याद्धृत्वंचैलंचकांचनम् वायुमालभ-
तेयस्तुतेजस्वीसभवेदिह ८१ वैमानिकोभवेद्दिव्योगंधर्वाप्सरसेवितः विष्णुपादोदकंयस्तुपिबेच्छ्रद्धासमन्वितः ८२ विष्णोर्लोकमवाप्नोतिन
चास्मिन्जायतेनरः शतमष्टोत्तरंयस्तुगायत्रीजपमाचरेत् ८३ त्रिकालेवैष्णवेहर्म्येसनपापेनलिप्यते अक्षसूत्रंपुस्तकंचयज्ञेपवीतंकमंड
लुम् चतुर्भुजातुगायत्रीश्रोत्रियाणांगृहेस्थिता ८४ सर्वलोकमयीदेवीगायत्रीयात्रयीमयी नित्याशास्त्रसमाख्यातालोकान्यातुप्रबोधयत् ८५
व्यासस्तुष्यतिनस्याशुविष्णुलोकंसगच्छति अत्रचोद्यापनेशास्त्रपुस्तकंदानमेवच ८६ सर्वविद्यासमंशांतकरणंललिताक्षरम् पुस्तकंसंप्रयच्छा
मिप्रीताभवतुभारती ८७ पुराणंशृणुयान्नित्यंधर्मशास्त्रमथापिवा पुण्यवान्धनवान्भोगीसत्यशौचपरायणः ८८ ज्ञानवान्लोकविख्यातो बहु
शिष्यःसुधार्मिकः कांचनेनयुतंपुण्यंपुस्तकंचनिवेदयेत् ८९ नाममंत्रव्रतपरःशंभोर्वाकेशवस्यवा समासौप्रतिमांदद्यात्तस्यदेवस्यकांचनीम्
९० पंचवक्त्रोवृषारूढःप्रतिवक्त्रेत्रिलोचनः कपालशूलखट्वांगीचंद्रमौलिःसदाशिवः ९१ त्वयासुराणाममृतंविहायहालाहलंसंहृतमेवयस्मात्
तथासुराणांत्रिपुरंचदग्धमेकेषुणालोकहितार्थमीश ९२ त्वद्रूपदानाद्बहुपुण्यवांश्चदोषैर्विमुक्तश्चगुणालयोहम् तथाकुरुत्वांशरणंप्रपद्येममप्र-

…आ.कु.
२७

रसादृष्यामनसावचसातथा २८ पद्भ्यांकराभ्यांजानुभ्यांप्रणामोष्टांगउच्यते अष्टांगसहितेनापिनमस्कारेणयोर्चयेत् २९ सयांगति
वाप्नोतिनतांक्रतुशतैरपि यस्तुरौप्यंशिवप्रीत्येदद्याद्वर्षाक्रतुद्वये ३० ताम्रंवाप्रत्यहंदद्यात्स्वशक्त्याशिवतुष्टये सरूपांल्लभतेपुत्रान्
रुद्रभक्तिपरायणान् ३१ समाप्तौमधुपूर्णंतुपात्रंराजतमुत्तमम् प्रदद्यात्ताम्रदानंतुताम्रपात्रंगुडान्वितम् ३२ ताम्रंपुष्टिकरंसर्वदे
प्रीतिकरंशुभम् सर्वरक्षाकरंनित्यमतःशांतिंप्रयच्छमे ३३ यस्तुसमेहृषीकेशेस्वर्णदानंस्वशक्तितः वस्त्रयुग्मतिलैःसार्द्धंदत्वापापैःप्र
च्यते ३४ इहभुक्त्वामहाभोगानंतेशिवपुरंव्रजेत् सुवर्णरजतंताम्रंनित्यदानंचधान्यकम् ३५ नित्यश्राद्धंदेवपूजासर्वमेतत्सदक्षि
म् वस्त्रदानंतुयःकार्याच्चातुर्मास्येद्विजातये ३६ अभ्यर्च्यगंधपुष्पाद्यैःसविष्णुःप्रीयतामिति शय्यांदद्यात्समाप्तेतुवासःकांचनपट्टि
म् ३७ अक्षय्यंसुखमाप्नोतिधनंचधनदोपमम् योगोपीचंदनंदद्यान्नित्यंवर्षासुमानवः ३८ श्रीमतिस्तस्यसंतुष्टोभुक्तिंमुक्तिंद
तिच यद्वैदेवांगसंलग्नंकुंकुमादिविलेपनम् ३९ जलक्रीडासुगोपीनांहारवत्याम्रदान्वितम् गोपीचंदनमित्युक्तंमुनींद्रैःकिल्बिषापहम् ४
तस्माद्देयंप्रयत्नेनविष्णुर्दिशतिवांछितम् समाप्तावर्पितंदद्यात्तुलापरिमितंशुभम् ४१ तदर्धंवातदर्धंवासवस्त्रंचसदक्षिणम् ध
स्तुसमेहृषीकेशेप्रत्यहंतुव्रतान्वितः ४२ दद्याद्दक्षिणयासार्द्धंशर्करामपिवागुडम् अमृतस्यकलाप्रोक्ताइक्षुसारजशर्करा ४३ तस्
दानेनसंतुष्टोभानुर्दिशतिवांछितम् एवंव्रतेतुसंपूर्णेकुर्यादुद्यापनंतु [illegible] ४४ [illegible]पिप्रत्येकंतुपलाष्टकम् वित्तशाठ्य

प्रविमुच्यते भुक्त्वातुसकलान्भोगान्स्वर्गलोकेमहीयते ११ गीतंतुदेवदेवस्यकेशवस्यशिवस्यवा करोतिनित्यमाप्नोतिनरोजागरणेफ
लम् १२ प्रत्नंतेचपत्नींदद्यात्घंटांदेवायसुस्वराम् गुरोरवज्ञयायच्चानध्यायेध्ययनंकृतम् १३ सरस्वतीजगन्नाथजगज्जाड्यापहारिणि
साक्षाद्ब्रह्मकलत्रंचविष्णुरुद्रादिभिस्तुता १४ तन्मयाध्ययनोत्पन्नंजाड्यंहरवरानने घंटादानेनतुष्टात्वंब्रह्माणीलोकपावनी १५ विप्रप
दविनिर्मुक्तंतोयंयःप्रत्यहंपिबेत् चातुर्मास्येनरोभक्त्यामद्रूपंब्राह्मणंस्मरन् १६ मनोवाक्कायजनितैर्मुक्तोभवतिकिल्बिषैः व्याधिभिर्ना
भिभूयेतश्रीरायुस्तस्यवर्द्धते १७ समाप्तौगोयुगंदद्याद्ग्राममेकंवापयस्विनीम् तत्राप्यशक्तोराजेंद्रदद्याद्दासोयुगंव्रती १८ ब्राह्मणंवंदते
यस्तुसर्वदेवमयंस्मृतम् कृतकृत्योभवेत्सद्यःसर्वपापैःप्रमुच्यते १९ अक्षय्यंस्वर्गमाप्नोतिपितृभक्तिपरोनरः समाप्तौभोजयेद्विप्राना
र्तिंचविंदति १२० संध्यास्नानंतरःकृत्वासमाप्तौघृतकुंभदः वस्त्रयुग्मंतिलान्घंटांब्राह्मणायनिवेदयेत् २१ सारस्वतंयातितत्त्वंविद्यावा
न्भवेदिति संस्पृशेत्कपिलांयोवैनित्यंभक्तिसमन्वितः २२ तामेवालंकृतांदद्यात्सर्वांभूमिमथापिवा सर्वभौमोभवेद्राजादीर्घायुःप्रत
तापवान् २३ दानशीलःसदारंभःसर्वकंटकवर्जितः रूपवान्भाग्यसंपन्नोलभतेस्वर्गमक्षयम् २४ सवसेदिंद्रयत्स्वर्गेवत्सरान्रोम
मितान् नमस्करोतियःसूर्यंगणेशंचापिनित्यशः २५ आयुरारोग्यमैश्वर्यंलभतेकांतिमुत्तमाम् विघ्नराजप्रसादेनप्राप्नुयादीप्सितंफलं
२६ सर्वत्रविजयंचैवनात्रकार्याविचारणा रविःकार्यःस्वर्णस्यसिंदूरारुणसंनिभः २७ निवेदयेद्ब्राह्मणायसर्वकामार्थसिद्धये उरसा

लमेकंवादद्याच्छ्रीपतयेसुनः ६३ समासीयोषितंविप्रंसूक्ष्मवस्त्रविभूषणैः मिथुनंपूजयित्वातुजातीपुष्पैःसुशोभनैः ६४ पुमांस्तुश्रियमाप्नो-
तिनारीभर्त्तारमाप्नुयात् पुमांस्तुश्रियमाप्नोतिकमलामिवमाधवः ६५ तांबूलदानंयःकुर्याद्दूर्जयेद्वाजितेंद्रियः रक्तवस्त्रद्वयंदद्यात्करकंच-
सदक्षिणम् ६६ महालावण्यमाप्नोतिसर्वरोगविवर्जितः मेधावीसुभगःप्राज्ञोरक्तकंठश्चजायते ६७ गंधर्वत्वमवाप्नोतिस्वर्गलोकंचगच्छति
तांबूलंश्रीकरंभद्रंब्रह्मविष्णुशिवात्मकम् ६८ अस्यप्रदानाद्ब्रह्माद्याःश्रियंददतुपुष्कलाम् पूगेब्रह्माहरिःपत्रेचूर्णेसाक्षान्महेश्वरः ६९ ए-
तेषांसंप्रदानेनसंतुमेभाग्यसंपदः पूरितंपूगचूर्णेननागवल्लीदलान्वितम् १७० सचूर्णखादिरंचैवत्रीफलंचसमान्वितम् एलालवंगसंमि-
श्रंगंधर्वाप्सरसांप्रियम् ७१ कनकत्वानिरातंकेत्वत्प्रसादात्कुरुष्वमाम् चातुर्मास्यव्रतोपेतःसुवासिन्यैद्विजायच ७२ नारीवापुरुषो-
वापिहरिद्रांसंप्रयच्छति लक्ष्मीमुद्दिश्यगौरींवानत्वात्रंदक्षिणान्वितम् ७३ प्रदद्याद्भक्तिसंयुक्तंदेवीमेप्रियतामिति भात्रासहस्वरयंक्ते-
केनारीनार्यानथापुमान् ७४ सौभाग्यमक्षयंधान्यंधनपुत्रसमुन्नतिम् संप्राप्यरूपलावण्यंदेवीलोकेमहीयते ७५ उमामहेशमुद्दिश्य
चातुर्मास्येदिनेदिने संपूज्यविप्रमिथुनंतस्मैविप्रायशक्तितः ७६ दद्यात्सदक्षिणंहेमउमेशःप्रीयतामिति उमेशप्रतिमांहैमींदद्यादुद्या-
पनेबुधः ७७ पंचोपचारैःसंपूज्यधेन्वाचवृषभेणच भोजयेदपिमिष्टान्नंतस्यपुण्यफलंशृणु ७८ सौभाग्यंपूर्णमायुष्यंसंपत्तिश्चानपायि-
नी संपत्तिरक्षयाकीर्त्तिर्जायतेव्रतवैभवात् ७९ इहभुक्त्वाखिलान्कामानंतेशिवपुरंव्रजेत् तत्रास्थित्वाचिरंकालमुपभुज्यसुखंमहत्

कुर्याणीयद्धापलचतुष्टयम् ४५ अशौचत्वार्यथैकंवाप्रत्येकंचसशर्करम् दक्षिणाफलवस्त्रेणप्रत्येकंवेष्टितानिच ४६ सहधान्यानिविप्रेभ्यः
श्रद्धयाप्रतिपादयेत् ताम्रपात्रंसवस्त्रंचशर्कराहेमसंयुतम् ४७ सूर्यप्रीतिकरंयस्माद्रोगघ्नंपापनाशनम् पुष्टिदंकीर्तिदंनॄणांनित्यंसंतान
कारकम् ४८ सर्वकामप्रदंस्वर्ग्यमायुर्वर्धनमुत्तमम् तस्माद्स्याप्रदानेनकीर्तिरस्तुसदामम ४९ एवंव्रतंतुयःकुर्यात्तस्यपुण्यफलंशृणु गं
धर्वविद्यासंपन्नःसर्वयोषित्प्रियोभवेत् ५० राजापिलभतेराज्यंपुत्रार्थीलभतेसुतान् अर्थार्थीप्राप्नुयादर्थंनिष्कामोमोक्षमाप्नुयात् ५१ यस्तुवै
चतुरोमासान्शाकमूलफलादिकम् नित्यंददातिविप्रेभ्यःशक्त्यायस्संभवेद्द्विजः ५२ व्रतांतेवस्त्रयुग्मंचशक्त्यादद्यात्तदक्षिणम् सुखीभूत्वा-
चिरंकालंराजयोगीभवेन्नरः ५३ सर्वदेवप्रियंयस्माच्छाकंतृप्तिकरंनृणाम् देवर्षिप्रीतिदंकंदमूलपत्रसपुष्पकम् ५४ ददामितेनदेवाद्याःसदा
कुर्वंतुमंगलम् यस्तुसुप्तेहृषीकेशेप्रत्यहंतुऋतुद्वये ५५ दद्यात्कटुत्रयंमर्त्योगृहपर्याप्तमादरात् ब्राह्मणायसुशीलायदिनेशप्रीतयेनघ ५६ द-
क्षिणासहितंविप्रेमंत्रेणानेनसुव्रत कटुत्रयमिदंयस्माद्रोगघ्नंसर्वदेहिनाम् ५७ तस्माद्स्यप्रदानेनप्रीतोभवतुभास्करः एवंकृत्वाव्रतंसम्य-
क्कुर्यादुद्यापनंबुधः ५८ कृत्वास्वर्णमयींशुंठिंमरीचींमगधीमपि सवस्त्रांदक्षिणायुक्तांदद्याद्विप्रायधीमते ५९ एवंव्रतंयःकुरुतेसजीवेच्छरदांश
तम् प्राप्नुयादीप्सितानर्थानंतेस्वर्गंव्रजेदिति ६० मुक्ताफलानियोनित्यंदद्याद्विप्रायसन्मतिः अन्नवान्कीर्तिमान्श्रीमानजायतेवसुधाधिप
६१ चातुर्मास्येप्रत्यहंतुक्षीरकुंभंप्रदापयेत् वेष्टयित्वासुवस्त्रेणफलैर्दक्षिणयासह ६२ सुवासिनींश्रियंमत्वागंधपुष्पैःप्रपूजयेत् तांबूलंफ-

ब्राह्मणभोजनम् १७ सर्वपापविशुद्धात्मायातिब्रह्मसनातनम् एकांतरोपवासेतुसीराण्यष्टौप्रदापयेत् १८ वस्त्रकांचनयुक्तानिशय्यासहभामिनी अनडुद्द्वयसंयुक्तंलांगलंकर्षणाक्षमम् १९ सर्वोपस्करसंयुक्तंदद्यामिप्रीयतांहरिः शाकमूलफलैर्वापिचातुर्मास्यंनयेद्यः २०० समासोगोप्रदानेनसगच्छेद्विष्णुमंदिरम् पयोव्रतीतथायोतिब्रह्मलोकंसनातनम् व्रतान्तेचतथादद्याद्गांमेकांचपयस्विनीम् रंभायाश्चपलाशेषुयोभुंक्तेचक्रतुद्वये २ वस्त्रयुग्मंचकांस्यंचशक्त्यादद्यात्सरवीभवेत् कांस्यब्रह्माशिवोलक्ष्मीःकांस्यमेवविभावसुः ३ कांस्यंविष्णुमयंयस्मादतःशांतिंप्रयच्छमे नित्यंपलाशभोजीचतैलाभ्यंगविवर्जितः ४ सदहत्यतिपापानितूलराशिमिवानलः ब्रह्मघ्नश्चसुरापश्चबालघातकरश्चयः ५ असत्यवादिनोयेचस्त्रीघातीव्रतघातकः अगम्यागामिनश्चैवविधवागामिनस्तथा ६ चांडालीगामिनश्चैवविप्रस्त्रीगामिनस्तथा तेसर्वेपापनिर्मुक्ताव्रतेनानेनकेशव ७ समासौकांस्यपात्रंतुचतुःषष्टिपलैर्युतम् सवत्सांगांचयोदद्यात्सालंकारांपयस्विनीम् ८ अलंकृतायविदुषेसुवस्त्रायसुवेषिणे भूमौविलिप्ययोभुंक्तेदेवंनारायणंस्मरन् ९ दद्याद्भूमिंयथाशक्तिकृष्णांवहुजलांतिके आरोग्यपुत्रसंपन्नोराजाभवतिधार्मिकः २१० शत्रोर्भयंनलभतेविष्णुलोकंसगच्छति अयाचितेत्वनड्वाहंसहिरण्यंसचंदनम् ११ षड्रसंभोजनंदद्यात्सयातिपरमांगतिम् यस्तुस्वपितेहृषीकेशेनक्तंचकुरुतेव्रतम् १२ ब्राह्मणान्भोजयेत्पश्चात्स्विर्गलोकेमहीयते एकभक्तंनरःकृत्वामिताशीचदृढव्रतः १३ योर्चयेच्चतुरोमासान्वासुदेवं[illegible] समासौभोजयेद्विद्वान्शक्त्यादद्याच्च

८० पुण्यशेषादिहागत्य जायते धरणीपतिः फलदानं तु यः कुर्याच्चातुर्मास्यमतंद्रितः ८१ समाप्तौ कालधौतानि तानि दद्याद्द्विजातये सर्वान्मनो
रथान्प्राप्य संततिं चानपायिनीम् ८२ फलदानस्य माहात्म्यान्मोदते नंदने वने पुष्पदानव्रते चापि स्वर्णपुष्पादि दापयेत् ८३ स सौभाग्यं
परं प्राप्य गंधर्वपदमाप्नुयात् वार्त्ताकुं वर्जयेद्यस्तु चातुर्मास्यमतंद्रितः ८४ नित्यं वामनमुद्दिश्य दध्यन्नं स्वादुपड्रसैः भोजयेदथ वा दद्याद्दंक्षा
दद्यां न भोजयेत् ८५ दानमेव प्रकुर्वीत ग्रहणादौ तथैव च अशक्तो नित्यदानं तु कुर्यात्पंच सुपर्वसु ८६ भूताष्टम्याममायां च पूर्णिमा
यां तथापि च प्रत्यर्कवारमथवा प्रतिभार्गववासरम् ८७ पक्षद्वयेपि द्वादश्यामवश्यं दानमिष्यते एवं कृत्वा समाप्तौ तु यथाशक्ति महीं ददेत्
८८ अशक्तो भूमिदाने तु धेनुं दद्यादलंकृताम् तत्राप्यशक्तो वासश्च सरुक्मं पादुके तथा छत्रोपानद्द्वयं युतं दानं सर्वं प्रशस्यते ८९ द्विजा
नां भोजनं चैव क्षत्रियस्य यथा सुखम् भूम्यादि मुनिशार्दूल वैश्यस्य वसुधां विना ९० ब्राह्मणस्यापि शक्तस्य शूद्रस्यापि तथा मतम् कुबेरेण
पुराचीर्णं शंकरस्योपदेशतः ९१ जह्नुना गौतमेनापि शक्रेणापि कृतं पुरा अक्षय्यमन्नमाप्नोति पुत्रपौत्रादिसंपदम् ९२ दद्यात्संपूर्णमायुष्यं
लभते वैरिनाशनम् सुस्थिरां विष्णुभक्तिं च प्रयाति हरिमंदिरम् ९३ आरोग्यं सौख्यमतुलं रूपसंपत्तिमेव च अवध्या कर्तृकं चेदमनंतफ
लदायकम् ९४ नित्यं पयस्विनीं दद्यात्सालंकारां शुभावहाम् दत्त्वा तु दक्षिणां शक्त्या स सर्वज्ञानवान्भवेत् ९५ न पश्यति यमं यांति ब्रह्म
लोकं च गच्छति अक्षय्यं सुखमाप्नोति पितृभिः सहितो नरः ९६ वार्षिकांश्चतुरो मासान्प्राजापत्यं चरेन्नरः समाप्तौ गोयुगं दद्यात्कृत्वा

मोदतेशिवमंदिरे श्रावणेमासिराजेंद्रयःकुर्यान्नक्तभोजनम् ९९ अश्वमेधफलंप्राप्यशिवलोकंचगच्छति यःकुर्याच्छ्रावणेमासिमुनिपत्रेषु
भोजनम् १०० ब्रह्मलोकंसमासाद्यमोदतेब्रह्मवर्चसा शिवंविष्णुंसमुद्दिश्यब्राह्मणान्भोजयेद्यदि १ श्रावणेशुक्लद्वादश्यांमुच्यतेचऋणत्रयात्
श्रावणेमासिकर्तव्यंफलराशिविमोक्षणम् २ तस्यवैसंततेर्हानिराकल्पंनैवजायते योदद्याच्छ्रावणेमासिमातुलिंगंद्विजातये ३ तस्यपुत्रो-
भवेद्राजन्सर्वपापैःप्रमुच्यते श्रावणेतुव्यतीपातेब्राह्मणान्भोजयेद्यदि ४ पायसेनघृताक्तेनवंध्यापुत्रमवाप्नुयात् येचविष्णुकथासक्तायेचव्रत
यजनाशयाः ५ गायत्रीजपनिरतानतेयांतियमालयम् सहस्रनामपठनेनिरतास्तोत्रपाठकाः ६ गीतापाठेतुनिरतास्तेनयांतियमालयम्
गोदानस्यप्रदातारःशिवयात्रापरायणाः ७ गोपीचंदनलिप्तांगानतेयांतियमालयम् येषांगृहेअग्निहोत्रंपुस्तकंभागवतस्यच ८ गीतायाः
पुस्तकंचापिनतेयांतियमालयम् रुद्राक्षंचप्रवालंचहेममुक्तालयेस्थिताः ९ धारयन्खड्गपात्रंचनतेयांतियमालयम् श्रावणेमासिकर्तव्यं-
सोमवारव्रतंशुभम् १० नक्तव्रतंप्रदोषंचकर्तव्यंविधिपूर्वकम् इत्यादिष्टाभगवताऋषयःशंसितव्रताः ११ सदाविष्णुकथासक्तचेतसां-
भावितात्मनाम् कर्मलोपंपूरयंतिकृत्वाकृत्वाप्यहर्निशम् १२ स्नात्वाविष्णुकथांश्रुत्वातथासंपूज्यमाधवम् सर्वबंधाद्विनिर्मुक्तोविष्णोःसा-
युज्यमाप्नुयात् १३ आदावंतेतथामध्येयथाशक्तियथारुचिः उद्यापनंविनाराजन्फलंनैवभवेत्क्वचित् १४ तस्मात्सर्वप्रयत्नेनउद्याप
नविधिंचरेत् पंचाशद्वाशतंवापिब्राह्मणान्भोजयेत्ततः १५ एतच्छास्त्रप्रवक्तारंयथाविभवमर्चयेत् आपूजयित्वावक्तारंयःश्रृणोति-

स्रेषुनदीद्वीभवेन्नरः वैधव्यंनैवसाप्नोतिनारीजन्मशतेष्वपि ८२ नारीवापुरुषोवापिनिर्माल्यंस्रग्गंधिच दत्वाचैकंमहाविष्णोर्ब्रह्महत्यां
व्यपोहति ८३ दशांगंगुग्गुलंधूपंसमर्पयतिविष्णवे नतस्यसंततेर्हानिर्निष्पापीजायतेकुले ८४ घंटानादंतुयःकुर्यात्पूजाकालेमहात्मनः
स्तूयमानोमुनिगणैर्विष्णुलोकेमहीयते ८५ घंटानादविहीनंतुयःकुर्याद्देवतार्चनम् सभुक्त्वानरकान्घोरान्समूकोबधिरोभवेत् ८६
दीपदानंतुयःकुर्याद्देवायपरमात्मने अज्ञानांधतमोभित्वासाक्षात्पश्यतितंहरिम् ८७ दीपायतैलवर्तिंवापात्रंवायोददातिच स्त्रीनरान
पुनःकर्मलेशमात्रंनविद्यते ८८ तैलपात्रंतथावर्त्तिंनददातिस्वशक्तितः अभावेसर्वथाकुर्यात्परदीपप्रबोधनम् ८९ भूत्वापश्चाद्द्विजकु-
लेजन्मसोपिमहायशाः कर्पूरस्यार्त्तिकंभक्त्याविष्णुर्यस्तुनिवेदयेत् २९० ब्रह्मलोकंसमासाद्यभुक्त्वाभोगान्मनोरथान् नभोमासिशिवंवि
ष्णुंकुर्याद्यदिप्रदक्षिणम् ९१ पदेपदेऽश्वमेधस्यफलंप्राप्नोतिनित्यशः एवंसंपूज्यदेवेशंकथांश्रुत्वाहरेरिमाम् ९२ एवंस्नात्वामासमेकमर्चये
न्माधवंशिवम् इमाःकथास्तथाश्रुत्वानगर्भेवसतिध्रुवम् ९३ युधिष्ठिरउवाच त्वद्वागमृतंपीत्वातृप्तिर्नासीन्ममात्मनः विनाजडमतिंको
केश्रवणात्कोनुतृप्यति ९४ भूयःश्रावणमाहात्म्यंतातविस्तरतोवद श्रीभगवानुवाच शृणुराजेंद्रवक्ष्यामिनभोमाहात्म्यमुत्तमम् ९५
यज्ज्ञात्वाजायतेश्रद्धिर्मनसोमहदंहसः श्रावणेतुफरवेतिष्ठन्यःस्नायादुष्णवारिणा ९६ वन्हिराशौमहाघोरेपतत्याशुनसंशयः श्रावणेमाध
वंदेवंपयसास्नापयेद्यदि ९७ स्नापयेत्तंचगव्येनसकोटिकुलमुद्धरेत् रुद्रसूक्तेनदेवेशंस्नापयेन्माधवंशिवम् ९८ कल्पकोटिसहस्राणि

ब्र·श्रा·कृ·
३३

रद्तेवच्चिलोकानांहितकाम्यया श्रावणेकादशीकृष्णाकामिकेतिचनामतः ६ तस्याःश्रवणमात्रेणवाजपेयफलंलभेत् तस्यांयःपूजयेद्देवंशं-
खचक्रगदाधरम् ७ श्रीधराख्यंहरिंविष्णुंमाधवंमधुसूदनम् यजतेध्यायतेयोवैतस्यपुण्यफलंशृणु ८ नगंगायांनकाश्यांवैनैमिषेनचपुष्क-
रे तत्फलंसमवाप्नोतियत्फलंविष्णुपूजनात् ९ केदारेचकुरुक्षेत्रेराहुग्रस्तेदिवाकरे नतत्फलमवाप्नोतियत्फलंकृष्णपूजनात् १० ससागरवनोपेतां
योददातिवसुंधराम् गोदावर्यांगुरौसिंहेव्यतीपातेचगंडके ११ नतत्फलमवाप्नोतियत्फलंकृष्णपूजनात् कामिकाव्रतकारीचक्षभोफलसमोस्म-
तौ १२ प्रसूयमानांयोधेनुंदद्यात्सोपस्करांनरः तत्फलंसमवाप्नोतिकामिकाव्रतकारकः १३ श्रावणेश्रीधरंदेवंपूजयेद्योनरोत्तमः तेनैवपूजितादेव
गंधर्वोरगपन्नगाः १३ तस्मात्सर्वप्रयत्नेनकामिकादिवसेहरिः पूजनीयोयथाशक्त्यामनुष्यैःपापभीरुभिः १५ संसारार्णवमग्नायेपापपंकसमाकुलाः
तेषामुद्धरणार्थायकामिकाव्रतमुत्तमम् १६ नातःपरतराकाचित्पवित्रापापहारिणी एवंनारदजानीहिस्वयमाहमुराहरिः १७ अध्यात्मविद्यानिरतै-
र्यत्फलंप्राप्यतेनरैः ततोबहुतरंविद्धिकामिकाव्रतसेवनात् १८ रात्रौजागरणंकुर्यात्कामिकाव्रतकृन्नरैः नपश्यतियमंरौद्रंनैवपश्यतिदुर्गति-
म् १९ नपश्यतिकुयोनिंचकामिकाव्रतसेवनात् कामिकायाव्रतेनैवकैवल्यंयोगिनोगताः २० सर्वैःसर्वप्रयत्नेनकर्तव्यानियतात्मभिः तुल-
सीप्रभवैःपत्रैर्योनरःपूजयेद्धरिम् नवैसलिप्यतेपापैःपद्मपत्रमिवांभसा २१ सुवर्णभारमेकंतुरजतंचचतुर्गुणम् तत्फलंसमवाप्नोतितु-
लसीदलपूजनात् २२ रत्नमौक्तिकवैडूर्यप्रवालादिभिरर्चितः नतुष्यतितथाविष्णुस्तुलसीपूजनाद्यथा २३ तुलसीमंजरीभिस्तुपूजितोय-

कथामिमाम् १६ इक्षुयंत्रेचिरंस्थित्वाभविष्यालोहिजायते नशृणोतिकथांयस्तुवाच्यमानामिमांद्विजः १७ अरण्येनिर्जलेदेशेभवतिब्र-
ह्मराक्षसः धर्मशास्त्रप्रवक्तारंशांतंदांतंजितेंद्रियम् १८ मिष्टान्नैर्भोजयेयस्तुसर्वपापैःप्रमुच्यते अनेनविधिनायस्तुचातुर्मास्यव्रतंचरे-
त् १९ तस्यपुण्यफलंवक्तुंविष्णुर्ब्रह्माशिवोयमः नेंद्रोनसूर्योवरुणोमन्वाद्याःकिमुतापरे ३२० व्रतैरनेकैर्नियमैःपांडवश्रेष्ठभावनः कृ-
ष्णस्थायीविष्णुलोकेवसतेनात्रसंशयः २१ ततोविवाहयेद्देवंशंखचक्रगदाधरम् कार्तिकेशुक्लपक्षस्यस्वेकादश्यांप्रयत्नतः २२ उत्तिष्ठो-
त्तिष्ठदेवेशयोगनिद्रांविहायच लक्ष्मींविसृज्यलोकेत्वमलक्ष्मींनुदकेशव २३ शृणोतिध्यातियःस्तौतिजुहोत्याख्यातियोनरः हरेर्भक्ति
परःपार्थसगच्छेद्वैष्णवंपदम् २४ दुग्धाब्धिवीचिशयनेभगवाननंतोयस्मिन्दिनेस्वपितिचाथविबुध्यतेच तस्मिन्ननन्यमनसामुपवासभा-
जांपुंसांददातिचगतिंगरुडासनोसौ २५ इतिश्रीभविष्योत्तरपुराणेविष्णोःशयन्येकादशीचातुर्मास्यमाहात्म्यश्रावणकृत्यंसंपूर्णम्

अथश्रावणकृष्णैकादशीकथा युधिष्ठिरउवाच आषाढशुक्लपक्षेतुयद्देवशयनव्रतम् तन्मयाश्रुतपूर्वंहिपुराणेबहुविस्तरम् १
श्रावणेकृष्णपक्षेतुकिन्नामैकादशीभवेत् एतत्कथयगोविंदवासुदेवनमोस्तुते २ श्रीकृष्णउवाच शृणुराजन्प्रवक्ष्यामिव्रतंपापप्र-
णाशनम् नारदायपुराराजन्पृच्छतेचपितामहः ३ यदुक्तवान्तातत्तदहंतेवदामिच नारदउवाच भगवन्श्रोतुमिच्छामित्व-
त्तोहंकमलासन ४ श्रावणस्यासितेपक्षेकिन्नामैकादशीभवेत् कोदेवःकोविधिस्तस्याःकिंपुण्यंकथयप्रभो ५ ब्रह्मोवाच शृणुन

वद्द्रविणंनगृहीतंमयाक्वचित् ८ न्यासापहारोनकृतःपरस्यबहुपापदः कृतंवत्पालितालोकाधर्मेणाविजितामही ९ दुष्टेषुपातितोदंडोबंधुपु-
त्रोपमेष्वपि शिष्टाःकृपूजितालोकाद्वेष्याश्चापिमहाजनाः १० इत्येवंव्रजतोमार्गेधर्मयुक्तेद्विजोत्तमाः कस्मान्ममगृहेपुत्रोनजातस्तद्विचार्यताम्
११ इतिवाक्यंद्विजाःश्रुत्वासप्रजाःसपुरोहिताः मंत्रयित्वानृपहितंजग्मुस्तेगहनंवनम् १२ इतस्ततश्चपश्यंतश्चाश्रमानृषिसेवितान् नृपतेर्हि-
तमिच्छंतोददृशुर्मुनिसत्तमम् १३ तप्यमानंतपोघोरंचिदानंदंनिरामयम् निराहारंजितात्मानंजितक्रोधंसनातनम् १४ लोमशंधर्मतत्त्वज्ञं
सर्वशास्त्रविशारदम् दीर्घायुषंमहात्मानंमनेकब्रह्मसंमितम् १५ कल्पेगतेयस्यएकमेकंलोमविशीर्यते अतोलोमशनामानंत्रिकालज्ञंमहा-
मुनिम् १६ तंदृष्ट्वाहर्षिताःसर्वेआजग्मुस्तस्यसंन्निधौ यथान्यायंयथार्हंतेनमश्चक्रुर्यथोदितम् १७ विनयावनताःसर्वेऊचुश्चैवपरस्परम् अ-
स्मद्भाग्यवशादेवप्राप्तोयंमुनिसत्तमः १८ तांस्तथाप्रणतान्दृष्ट्वाकृवाचमुनिसत्तमः लोमशउवाच किमर्थमिहसंप्राप्ताःकथयध्वंस्वकारणम् १९
मद्दर्शनाल्हादगिरःकृवंतइवमांकिमु असंशयःकरिष्यामिभवतांयद्धितंभवेत् २० परोपकृतयेजन्ममादृशानांनसंशयः जनाऊचुः श्रूयता-
मभिधास्यामोवयमागमकारणम् २१ संशयच्छेदनार्थायतवसंनिधिमागताः पद्मयोनेःपरतरस्त्वत्तःश्रेष्ठोनविद्यते २२ अतःकार्यवशात्प्राप्ताः
समीपंभवतोवयम् महीजिन्नामराजासौपुत्रहीनोस्तिसांप्रतम् २३ वयंतस्यप्रजाब्रह्मन्पुत्रवत्तेनपालिताः तंपुत्ररहितंदृष्ट्वातस्यदुःखेन
दुःखिताः २४ तपःकर्तुमिहायातामतिंकृत्वातुनैष्ठिकीम् तस्यभाग्यवशाद्दृष्टस्त्वमस्माभिर्द्विजोत्तम २५ महतांदर्शनेनैवकार्यसिद्धिर्भवेन्नृणाम्

नकेशवः आजन्मकृतंपापस्यतेनसंमार्जितालिपिः २४ यादृष्टानिखिलाघसंगशमनीदृष्टावपुःपावनीरोगाणामभिवंदितानिरसनीसिक्तांतक
त्रासिनी प्रत्यासत्तिविधायिनीभगवतःकृष्णस्यसंरोपितान्यस्तातच्चरणेविमुक्तिफलदातस्यैतुलस्यैनमः २५ दीपंददातियो
मर्त्योदिवारात्रौहरेर्दिने तस्यपुण्यस्यसंख्यानंचित्रगुप्तोपिवेत्तिन २६ कृष्णाग्रेदीपकोयस्यज्वलदेकादशीदिने पितरस्तस्यतृप्यंति अमृतेन-
दिविस्थिताः २७ घृतेनदीपंप्रज्वाल्यतिलतैलेनवापुनः प्रयातिसूर्यलोकेसौदीपकोटिशतैर्वृतः २८ अयंतवाग्रेकथितःकामिकामहिमामया
अतोनरैःप्रकर्त्तव्यासर्वपातकहारिणी २९ ब्रह्महत्यापहरणीभ्रूणहत्याविनाशिनी त्रिदिवस्थानदात्रीचमहापुण्यफलप्रदा ३० श्रुत्वामा
हात्म्यमेतस्यानरःश्रद्धासमन्वितः विष्णुलोकमवाप्नोतिसर्वपापैःप्रमुच्यते ३१ इतिश्रीब्रह्मवैवर्तपुराणेश्रावणकृष्णैकादशीकामिकाना-
म्नीमाहात्म्यंसंपूर्णम् ३ अथश्रावणशुक्लैकादशीकथा युधिष्ठिरउवाच श्रावणस्यसितेपक्षेकिंनामैकादशीभवेत् कथयस्वप्रसा-
देनममाग्रेमधुसूदन १ श्रीकृष्णउवाच शृणुष्वावहितोराजन्कथांपापहरांपराम् यस्याःश्रवणमात्रेणवाजपेयफलंलभेत् २ द्वापरस्य-
युगस्यादौपुरामाहिष्मतीपुरे राजामहीजिदाख्यातोराज्यंपालयतिस्वयम् ३ पुत्रहीनस्यतस्यैवनतद्राज्यंसुखप्रदम् अपुत्रस्यसुखंनास्तिइ-
हलोकेपरत्रच ४ यततोस्यसुतप्राप्तौकालोबहुतरोगतः नप्राप्तश्चसुतोराज्ञासर्वसौख्यप्रदोनृणाम् ५ दृष्ट्वात्मानंप्रवयसंराजाचिंतापरोभव-
त् सदोगतःप्रजामध्येइदंवचनमब्रवीत् ६ इहजन्मनिभोलोकाःनमयापातकंकृतम् ७ अन्यायोपार्जितंवित्तंक्षिप्तंकोशेमयानहि ब्रह्मस्वंदे

भा॰कृ॰
३५

क्षेतुकिन्नामैकादशीभवेत् एतदिच्छाम्यहंश्रोतुंकथयस्वजनार्दन १ श्रीकृष्णउवाच शृणुष्वेकमनाराजन्कथयिष्यामिविस्तरात् अजेति
नामतःप्रोक्तासर्वपापप्रणाशिनी २ पूजयित्वाहृषीकेशंव्रतंतस्याःकरोतियः पापानितस्यनश्यंतिव्रतस्यश्रवणादपि ३ नातःपरतराराजन्लो
कद्वयहितावहा सत्यमुक्तंमयाह्येतन्नासत्यंभाषितंमम ४ हरिश्चंद्रइतिख्यातोबभूवनृपतिःपुरा चक्रवर्तीसत्यसंधोसमस्तायाभुवःपतिः ५
कस्यापिकर्मणोयोगाद्राज्यभ्रष्टोबभूवसः विक्रीत्वावनितांपुत्रंसचकारात्मविक्रयम् ६ पुल्कसस्यचदासत्वंगतोराजासपुण्यकृत् सत्यमा-
लंब्यराजेंद्रमृतचेलापहारकः ७ सोभवन्नृपतिश्रेष्ठोनसत्याच्चलितस्तथा एवंगतस्यनृपतेर्बहवोवत्सरागताः ८ ततश्चिंतापरोराजाब-
भूवात्यंतदुःखितः किंकरोमिक्वगच्छामिनिष्कृतिर्मेकथंभवेत् ९ इतिचिंतयतस्तस्यमग्नस्यवृजिनार्णवे आजगाममुनिःकश्चिज्ज्ञात्वारा
जानमातुरम् १० परोपकारणार्थायनिर्मितोब्रह्मणाद्विजः सतंदृष्ट्वाद्विजवरंननामनृपसत्तमः ११ कृतांजलिपुटोभूत्वागौतमस्याग्रतः
स्थितः कथयामासवृत्तांतमात्मनोदुःखसंयुतम् १२ श्रुत्वानृपतिवाक्यानिगौतमोविस्मयान्वितः उपदेशंनृपतयेव्रतस्यास्यमुनिर्ददौ
१३ मासिभाद्रपदेराजन्कृष्णपक्षेतुशोभना एकादशीसमायाताअजानाम्यतिपुण्यदा १४ तस्याःकुरुव्रतंराजन्पापनाशोभविष्यति
तवभाग्यवशादेषासप्तमेह्निसमागता १५ उपवासपरोभूत्वारात्रौजागरणंकुरु एवंतस्याव्रतेचीर्णेसर्वपापक्षयोभवेत् १६ तवपुण्यप्रभा-
वेनचागतोहंनृपोत्तम इत्येवंकथयित्वातुमुनिरंतरधीयत १७ मुनिवाक्यंनृपःश्रुत्वाचकारव्रतमुत्तमम् कृतेतस्मिन्व्रतेराज्ञःपापस्यां



32

उपदेशंवदमुनेराज्ञःपुत्रोयथाभवेत् २६ इतितेषांवचःश्रुत्वामुहूर्त्तंध्यानमास्थितः प्रत्युवाचमुनिर्ज्ञात्वातस्यजन्मपुरातनम् २७ लोमशउवाच
पूर्वजन्मनिवैश्योयंधनहीनोनृशंसकृत् वाणिज्यकर्मनिरतोग्रामाद्ग्रामांतरंभ्रमम् २८ ज्येष्ठमासिसितेपक्षेदशमीदिवसेतथा मध्यान्हेघर्मणोग्रा
मेग्रामसीम्निजलाशयम् २९ कूपिकांसजलांदृष्ट्वाजलपानेमनोदधौ सद्यःसुतासवत्साचधेनुस्तत्रसमागता ३० तृषातुरानिदाघार्त्तातस्या
मापःपपौतुसा पिबंतींवारयित्वातामसौतोयंस्वयंपपौ ३१ कर्मणस्तस्यपाकेनसपुत्ररहितोनृपः पूर्वजन्मकृतात्पुण्यात्प्राप्तंराज्यमकंटकम् ३२
जनाऊचुः पुण्यात्पापंक्षयंयातिपुराणेश्रूयतेमुने पुण्योपदेशंकथययेनपापक्षयोभवेत् ३३ यथाभवत्प्रसादेनपुत्रोस्यभवितातथा लोमश-
उवाच श्रावणेशुक्लपक्षेतुपुत्रदानामविश्रुता एकादशीतिथिश्चास्तिकुरुध्वंतद्व्रतंजनाः ३४ यथाविधियथान्यायंयथोक्तंजागरान्वितम् त
स्याःपुण्यंसुविमलंददंतुनृपतेर्जनाः ३५ एवंकृतेतुनियतंराज्ञःपुत्रोभविष्यति श्रुत्वैतल्लोमशवचस्तंप्रणम्यद्विजोत्तमम् ३६ मजग्मुःस्वगृ
हान्सर्वेहर्षोत्फुल्लविलोचनाः श्रावणंतुसमासाद्यश्रुत्वालोमशभाषितम् ३७ राज्ञासहव्रतंचक्रुःसर्वेश्रद्धासमन्विताः द्वादशीदिवसेपुण्यंद-
दुर्नृपतयेजनाः ३८ दत्तेपुण्येयथाराज्ञीगर्भमाधत्तशोभनम् प्राप्तेप्रसवकालेसासुषुवेपुत्रमूर्जितम् ३९ एवमेषानृपश्रेष्ठपुत्रदानामविश्रुता
कर्त्तव्यासुव्रतमिच्छद्भिरिहलोकेपरत्रच ४० श्रुत्वामाहात्म्यमेतस्याःसर्वपापैःप्रमुच्यते इहपुत्रसुखंप्राप्यपरत्रस्वर्गतिर्भवेत् ४१ इतिश्रीभवि
ष्योत्तरपुराणेश्रावणशुक्लैकादशीपुत्रदानाममाहात्म्यंसंपूर्णम् अथभाद्रपदकृष्णैकादशीकथा युधिष्ठिरउवाच भाद्रस्यकृष्णप-

ष्टाःपृथिवींदेवाःकिमकुर्वन्जनार्दन १२ कोविधिःकिंव्रतंचैवचातुर्मास्यमुपास्यताम् स्वपितिस्मतेजगन्नाथकिंकुर्वंतिजनाःप्रभो १३ एतद्विस्तरतोब्रूहि दो
शयंहरमेप्रभो श्रीकृष्णउवाच श्रूयतांराजशार्दूलकथांपापहरांपराम् १४ बलिर्वैदानवःपूर्वमासीत्त्रेतायुगेनृप अपूजयच्चमांनित्यंमन्मनाके
त्परायणः १५ जपैस्तुविविधैस्सूक्तैर्यजतेमांसनित्यशः द्विजानांपूजकोनित्यंयज्ञकर्मकृताशयः १६ परंत्विंद्रकृताद्वेषीदेवलोकमजीजयत् म
त्तमिहलोकंवैजितंतेनमहात्मना १७ विलोक्यचततःसर्वेदेवाःसंहत्यमंत्रयन् सर्वैर्मिलित्वागंतव्यंदेवं विज्ञापितुंप्रभुम् १८ ततश्चदेवकृपया
साकमिंद्रोगतःप्रभुम् शिरसाह्यवनींगत्वास्तुतइंद्रेणसूक्तिभिः १९ गुरुणादैवतैःसार्द्धंबहुधापूजितोह्यहम् ततोवामनरूपेणह्यवतीर्णश्चपंच
२० अल्परूपेणतदासर्वब्रह्मांडरूपिणा बालकेनजितःसोवैसत्यमालंब्यतस्थिवान् २१ युधिष्ठिरउवाच त्वयावामनरूपेणसोसुरश्चजितःद
म् एतत्कथयदेवेशमह्यंभक्तायविस्तरात् २२ श्रीकृष्णउवाच मयाद्वीकेनसबलिःप्रार्थितोबटुरूपिणा पदत्रयमितांभूमिंदेहिमेभुवनत्रयम्
२३ दत्तंभवतितेराजन्नात्रकार्याविचारणा इत्युक्तश्चमयाराजादत्तवांस्त्रिपदांक्षयम् २४ संकल्पमात्राद्ववृधेदेहस्त्रैविक्रमःपरम् भूर्लो
तुकृतौपादौभुवर्लोकेतुजानुनी २५ स्वर्लोकेतुकटिंन्यस्यमहर्लोकेतथोदरम् जनलोकेतुहृदयंतपोलोकेचकंटकम् २६ सत्यलोकेमुखंस्थाप्य
मांगंतथोर्ध्वतः चंद्रसूर्यग्रहाश्चैवभगणोयोगसंयुतः २७ सेंद्राश्चैवतदादेवानागाःशेषादयःपरे स्तुवंतोवेदसंभूतैःसूक्तैश्चविविधैस्तुमाम्
करेगृहीत्वातुबलिमब्रुवंवचनंतदा एकेनभूमि[illegible]द्वितीयेनत्रिविष्टपम् तृतीयस्यतुपादस्यस्थानंदेहिममानघ एवमुक्तेमयासोपिमत्त

